| | | |
|---|---|---|
| Title | : | Khagolah ( खगोलः ) |
| Vol. : | : | 07 |
| Year | : | 2022 |
| ISSN | : | 2456-3420 |
| UGC Care Journal ID | : | 101000044 |
| Price | : | 350/- |



| | | |
|---|---|---|
| Copy | : | 100 |
| **Printed and Published by** | **:** | Prof. L.N. Pandey, Director<br>Central Sanskrit University, Vedavyas Campus,<br>Balahar, Himachal Pradesh-177108 |
| **Editor** | **:** | Dr. P.V.B. Subrahmanyam |
| **Email** | | pub.vvc@gmail.com |
| **Website** | | http://www.rsksbalahar.ac.in |
| **Fax/Phone** | | 01970-245409 |
| **Printed at** | **:** | Abhi Printers,<br>F-19A, Focal Point Ext. Jalandhar-144103.<br>09465238137 (M) |
| **Composed and Designed By :** | | Ajay Sharma for Abhi Printers. |

# EDITORIAL

यस्मिन् भूतं च भव्यं च सर्वे लोकास्समाहिताः

While delimiting knowledge areas many parameters are used. But most of them not felt in tune of the knowledge system. A critic from a corner of the Bharat Varsha emerges a word to denote the gap formed from those parameters. Veda is vocal and instrumental in performing the Yajna for the sake of the universe without any discrimination. Its one aspect of the divine knowledge as preferred by scholars. To fulfil the needs of the universe Veda should understand the nature of the universe! That's why it is called the natural music of the universe which uses divine medium for communication which is known as Samskritam. Veda is like a optical prism. Unlike the prism this divine knowledge has innumerable facets which give different meaning aspect with the change of perspective. This sole property of Veda allowed that scholar to name it as Jyotirveda and the examples provided by him convince anyone to accept his argument.

The sentence given above is excerpted from Krishna Yajurveda and the same Surya or the Sun is termed as Aniruddha in Suryasiddhanta. Its not limited to Suryasiddhanta but a number of works take Aniruddha as the creator of all universes and he is the one and only ruler or the source or the genesis of the universe.

The all-in-one theory of knowledge areas applied to predictive astrology also. To interpret one's life, as astrologer requires the understanding of everything. Lack of any such understanding leave his predictions half baked. So an astrologer or prophecy maker requires to update himself or herself with the developments in knowledge continuously. Change of life style and use of machines which are unknown or unheard previously demand such a multi-dimensional thought process in scholars to interpret something. This particular aspect is required to do deep research also. The R&D factor of VKS is assumed weaker than the R&D of modern sciences just because of the nonacceptance of the oneness or all in one theory.

Though modern scientists like respected Stephen Hawking, respected James Hapwood Jeans and others put similar thoughts in their works, it is seldom made a common point to demark the knowledge areas. Khagolah believes in this oneness theory and it aspects any piece of thought process or research or hypothesis as a part of the wide spread Jyotirveda. Hence Khagolah is named as journal of Jyotish and related fields and accept paper for any field just to widen and strengthen the thought process of VKS. The VKS has nothing to do with the concepts of IKS, though it respects all thoughts and concepts, and stands universal in the matter of investigation, collaboration, research and development.



# विषयसूची

ISSN 2456-3420

# ग्रहणमुकुरनामकस्य ग्रहणगणितविषयकस्य ग्रन्थस्य देशकालकर्तृनिर्णयपूर्वकं समीक्षणं तद्वैशिष्ट्यानां विवेचनं च

**Dr. Ramakrishna Pejathaya**

**Abstract:**

ग्रहणगणितविषयकं ग्रहणमुकुराभिधं कञ्चन ग्रन्थं प्रकृतलेखकोऽधुना समीक्षणसहितं सम्पादयन्नस्ति, द्वाभ्यां तदभिज्ञाभ्यां साकम्। ग्रन्थोऽयंपञ्चदशे शतके (15th Century CE) कर्णाटकस्य शृङ्गगिरिक्षेत्रे (Sringeri) प्राप्तजन्मेति ग्रन्थगतैः प्रमाणैः शक्यमुन्नेतुम्। ग्रहणमात्रं विषयीकृत्य प्रणीतानां कृतीनां वैरल्येन प्रकृतग्रन्थो वैशिष्ट्यं भजते। अस्य ग्रन्थस्य प्राथमिकं परिचयं प्रदाय अत्रत्यान् विशेषान् विशदयितुं प्रकृतलेखः प्रवृत्तोऽस्ति। प्रकृते ग्रन्थे तद्देशकालकर्तॄणाम् उल्लेखोऽपि न विलोक्यते, न चैतद्विषये क्वापि कापि वार्ता भवत्युपलब्धा। अतोऽनयाऽपि धिया इह साधारं विवेचनं विहितमस्ति।

**Keywords:-**

Jyotisha, Indian astronomy, eclipse, grahana, Grahanamukura, DemanaJoyisa, Shankaranarayana Joyisa, Viddanacharya

**1. प्रस्तावना**

इदं किल नाविदितं विदुषां यज्ज्यौतिषशास्त्रे सिद्धान्तनाम्ना चिरात्सम्प्रवृद्धस्य स्कन्धविशेषस्य ग्रहगणितं प्रमुखः प्रतिपाद्यो विषय इति। अत्र हि स्फुटग्रहाः, नित्यपञ्चाङ्गम्, सङ्क्रान्त्यादयः कालविशेषाः, अक्षांशायनांशप्रभृतयो दिग्देशकालसम्बद्धा विषयाः, सूर्यचन्द्रयोर्ग्रहणम्, ग्रहयुतिः, ग्रहनक्षत्रयुतिः, ग्रहाणाम् अस्तोदयौ, चन्द्रशृङ्गोन्नतिः पातश्चैवं ये ग्रहनक्षत्रसम्बद्धा विषयाः कालनिर्णये फलादेशे वा नितान्तम् उपकुर्वते तेषां गणितविधयः सोपपत्तिकम् उपदिश्यन्ते। तदेवं स्कन्धोऽयं गणितसामान्य-ज्ञानमपेक्षत इति कृत्वा अगणितं गणितजातम् एतदङ्गत्वेन समृद्धिमगात्। गोलनामकोऽपि विभागः स्कन्धेऽस्मिन्नन्तर्भावितो यतो हि गोलज्ञानेन विना गणिताध्यायोक्तानाम् अंशानाम् उपपत्तिः सुदुःशका। तदेवं गणितं ग्रहगणितं गोलश्चैवं त्रिविधा अपि विषयाः सिद्धान्तग्रन्थेषु प्राप्तस्थाना विलसन्तितमाम्। आर्यभटब्रह्मगुप्त-भास्करप्रभृतयः प्राञ्चः परमेश्वरदैवज्ञनीलकण्ठसोमयाजि-प्रभृतयोऽर्वाञ्चश्च मतिमन्तः काले काले स्वोपज्ञैर्विषयैः स्कन्धमेनं तथा उपबृंहयामासुः, येनाधुनापि भारतीयं खगोलशास्त्रं गणितशास्त्रं च विश्वमान्यं वरीवर्ति।

**2. ग्रहणगणितम्**

ग्रहणगणितं सिद्धान्तज्योतिषस्य प्रमुखम् अविभाज्यं चाङ्गम्। यथाह तद्वैशिष्ट्यं भास्करः -

**बहुफलं जपदानहुतादिके स्मृतिपुराणविदः प्रवदन्ति हि।**
**सदुपयोगि जने सचमत्कृति ग्रहणमिन्द्विनयोः कथयाम्यतः॥**

(सिद्धान्तशिरोमणिः 5.1)

सिद्धान्तग्रन्थेषु चन्द्रार्कग्रहणनिर्धारणपरं गणितजातं नियमेन सन्निविष्टं भवतीति प्रागुक्तमेव। किञ्च विषयोऽयं तथा महिमानं भजते यदस्मिन् विषये नैके स्वतन्त्रग्रन्था अप्याविर्बभूवुः। ईदृक्षु ग्रन्थेषु कालदृष्ट्या प्राथम्यं भजेते ब्रह्मगुप्तकर्तृकं ग्रहणार्कज्ञानं[1] श्रीपतीयं धीकोटिदं करणं च। ततः परं प्राप्तजन्मानो ग्रन्थेन (नाम्ना वा) विदिताः काश्चनग्रहणैकविषयाःकृतयो यथा -

| क्र. | ग्रन्थः | कर्ता | कालः |
|---|---|---|---|
| 1 | ग्रहणमण्डनम् | परमेश्वरदैवज्ञः | 1411 CE |
| 2 | ग्रहणव्याख्यादीपिका | परमेश्वरदैवज्ञः | 15th Century CE |
| 3 | ग्रहणनिर्णयः | नीलकण्ठसोमयाजी | 15th Century CE |
| 4 | उपरागक्रियाक्रमः | अच्युतपिशारटी | 1593 CE |
| 5 | उपरागविंशतिः | अच्युतपिशारटी | 16th Century CE |
| 6 | ग्रहणमाला सामान्यशके 1620तः 2708 पर्यन्तं जातानां जनिष्यमाणानां च सर्वेषां सूर्यचन्द्रग्रहणानां विवरणम् | हेमाङ्गदठक्कुरः | 16th Century CE |

इह दर्शितेषु आद्यं ग्रन्थपञ्चकं केरलीयगणितपरम्परायां प्राप्तजनुष्कम्। विशिष्य परमेश्वरदैवज्ञः पञ्चपञ्चाशद्वर्षकालं ग्रहणानाम् अध्ययनं चकार[2] यस्योपयोगो न केवलं ग्रहणगणिते किञ्च स्फुटग्रहावाप्तावपि। प्रकृता ग्रहणमुकुरकृतिः परमेश्वरीयकृतेः स्तोकम् अर्वाचीना इत्ययमप्यंशोऽस्माकम् अवधानार्हः।[3]

**3. ग्रहणमुकुरमातृकावाप्तिः**

प्रकृतग्रन्थस्य मातृका सम्प्राप्ता प्रथमं परिष्कृता च सीतारामनाम्ना भारतीयविद्यानद्धचित्तेन।[4] कदाचिन्निजमातामह-सङ्ग्रहे स्थितेन केनचित् ताडग्रन्थग्रन्थिना तन्नेत्रे भृशमाकृष्टे अभवताम्। तन्मातामहस्तावत् कुलपतिशङ्करनारायणजोयिस[5] (1903-98) इति नाम्ना प्रथितो विपश्चिदपश्चिमः। शृङ्गगिर्यभिजनोऽयं जनो महीशूरपुरीस्थे महाराज-संस्कृतमहाविद्यालये समधीतविद्यः सन् शृङ्गगिरिमुकुटीभूते श्रीशारदापीठे आस्थानविद्वानिति गौरवमपि प्राप्तवानासीत्। तदीयेन विद्यावैचक्षण्येन सेवाधौरीण्येन च हृतचेतोभिः श्रीचरणैः कुलपतिरिति बिरुदेन स सभाजितश्चासीत्। यदसौ तत्रत्यायां सद्विद्यासञ्जीविनीपाठशालायाम् अधिकचत्वारिंशानि हायनानि आचार्यतां प्राचार्यतां च दधौ तदधुनापि सादरं संस्मर्यते वृद्धैः। तस्मात्स्वमातामहे निभृतं बद्धश्रद्धस्य सीतारामस्य अस्मिन् ताडग्रन्थराशौ किमपि वैशिष्ट्यं स्यादिति भाव आविरभूत् तदध्ययनेच्छा च प्रत्यहं रूढमूलतामगात्। कर्मण्यस्मिन् तदीया तादृशी

श्रद्धा यत्स्वयमेव तत्रोपयुक्ता लिपीरधीत्य ग्रन्थसम्पादनोपयोगिनो विषयानवगत्य च तासां मातृकाणामध्ययने आत्मानं न्ययूयुजत्। ग्रन्थाश्चात्र आसन् विभिन्नविषयकाः। परं तत्रैकस्मिन् ग्रन्थगुच्छे षड् ग्रन्था आसन् ये तदवधि असूर्यम्पश्याः सिद्धान्तज्यौतिषसम्बद्धाः।[6] ते च –

1. करणाभरणम्
2. गणितगन्नडि
3. तन्त्रदर्पणः
4. चोलराजीयम्
5. ग्रहणरत्नम्
6. ग्रहणमुकुरः

तदनु स सपद्येव तन्महत्त्वम् विदित्वातेषाम् अध्ययनपूर्वके प्रकाशने मनीषामकार्षीत्। तत्प्रथमपदत्वेन नन्दिनागरीलिप्या स्थितान् इमान् ग्रन्थान् देवनागर्या निबद्धान् विधाय, मातृकाणां भावचित्रं प्रगृह्य च ज्ञानमेतद् यथा शाश्वतं स्यात्तथा अध्यङ्कितम् (digitalized) अकरोत्, श्रीशङ्कराद्वैतशोधकेन्द्रं शृङ्गेरी, राष्ट्रीय-पाण्डुलिपि-मिशन (National Mission for Manuscripts) नवदेहली चैतयोः साहाय्येन। मूलमातृकाणाम् अविनाशार्थमपि अपेक्षितानि कर्माणि विहितानि सन्ति।

तदेवं स सीतारामनामाजनोग्रन्थसम्पादनस्य प्राथमिकानि कर्तव्यानि स्वयमेव विधायत द्विशेषाध्ययनपुरःसरं व्याख्यानानुवादादि सहितं प्रकाशनम् अभिलषन्तदभियुक्तान् उपासर्पत्। तेषु केषाञ्चन तदनुकूलप्रवृत्त्यातदेतत्कार्यमभिलषितं यशः प्राप्नोद्येन केचन ग्रन्थाःप्राकाश्यं नीताः केचन तत्पथेपुरोगाश्च विद्यन्ते। तेषां साद्यस्की दशा इत्थं विवरीतुं शक्या –

**3.1 करणाभरणम्** (1603 CE)

तदिदं ब्रह्मदेवविरचितस्य करणप्रकाशनामकस्य करणग्रन्थस्य (कालः 1060-1130 CE)संस्कृतव्याख्यानम्। इदं च शङ्करनारायणजोयिसाख्येनविदुषा[7] विरचितम् इति तदीययैव प्रास्ताविकवाण्या वेत्तुमलम्। तदेतद्व्याख्यानं गणितोपपत्तिभिर्यथा-स्थानविवरणैश्च सम्पन्नं सद् भृशमुपकरोति जिज्ञासून्। महेशनामकेन संशोधकेन साङ्गलानुवादं सम्पादितः असौग्रन्थः तिरुपतिस्थेन राष्ट्रियसंस्कृतविश्वविद्यालयेन 2020 तमे वर्षेप्राकाश्यं नीतः।

**3.2 गणितगन्नडि** (1604 CE)

सोऽयं विद्दणाचार्यविरचितस्य वार्षिकतन्त्रनामकस्य करणग्रन्थस्य कर्णाटभाषामयः सव्याख्योऽनुवादः। अस्यापि कर्ता शङ्करनारायणजोयिस इति तद्वाक्यैरेव विज्ञायते। एषापि कृतिः सुललिताभिर्गणितोपपत्तिभिर्महते लाभाय भवत्यधीतिनाम्। संशोधकाभ्यां शैलजा-सीतारामाभ्यां समीक्षासहितं सम्पादितासौ कृतिः बेङ्गळूरुनगरस्थेन नवकर्नाटक-प्रकाशनेन 2021 तमे वर्षे प्राकाश्यं नीता वर्तते।

**3.3 चोळराजीयम्**

इदमस्ति प्रसिद्धस्य सूर्यसिद्धान्तस्य संस्कृतभाषामयं व्याख्यानम्। अस्य रचयिता चोळराजपण्डितः। अस्य सम्पादनमध्ययनं च प्रवर्तमानमस्ति।

**3.4 तन्त्रदर्पणः** (1601 CE)

विद्दणाचार्यविरचितस्य वार्षिकतन्त्रनामकस्य करणग्रन्थस्य संस्कृतं व्याखानमिदम्। अस्यापि रचयिता शङ्करनारायणजोयिसः। तथा चानेन वार्षिकन्त्रं प्रति तन्त्रदर्पणनामकं संस्कृतव्याख्यानं गणितगन्नडिनामकं कन्नडव्याख्यानं च सर्वेषाम् अवबोधार्थं कृतमस्तीति स्फुटीभवति। तन्त्रदर्पणस्याध्ययनं नारब्धमेतावता।

**3.5 ग्रहणरत्नम्**

ग्रहणगणितविषयकोऽयं संस्कृतग्रन्थः शङ्करनारायणकर्तृक इत्यत्र तद्वचनान्येव प्रमाणम्। सप्तषष्टिश्लोकोऽयं ग्रन्थः रव्यानयनं चन्द्रानयनम् उपकरणानि सोमग्रहणं सूर्यग्रहणं चेति पञ्चभिरध्यायैर्विभक्तः। अस्याप्यध्ययनं नैतावता समारब्धम्।

**3.6 ग्रहणमुकुरः**

अयमपि ग्रन्थो ग्रहणविषयक इति नाम्नैव स्फुटीभवेत् सुधियाम्। सप्तभिरध्यायैः विभक्तेऽस्मिन्ग्रन्थे संस्कृतमूलं कन्नडव्याख्यानं च वरीवर्ति। अस्यदेश-काल-कर्तृ-विषयाः सविस्तरम् उत्तरत्र विव्रियन्ते।

**4. प्रकृतग्रन्थस्य देशकालकर्तृत्वादिविचारः**

प्रकृतग्रन्थे संस्कृतमूलं कन्नडानुवादश्चेति द्वौ भागौ विद्येते। उभयत्रापि कर्तृविषयो नाभिहितः। अतोऽस्मिन् विषये अनुमानमेव शरणं नः। तथा च तदनुमितौ सहकारिणोंऽशाः क्रमेणोल्लेखिष्यन्ते –

- अस्मिन् मातृकागुच्छे येऽन्ये पञ्च ग्रन्था उपलब्धास्तत्र चतुर्षु अनुगतं नाम वर्तते शङ्करनारायणजोयिस इति। करणाभरणं गणितगन्नडि तन्त्रदर्पणं ग्रहणरत्नं चैते ग्रन्थास्तत्कर्तृका इति तद्वचनैरेव व्यक्तम्।[8] एवमेतेषां चतुर्णामेककर्तृकत्वात् तन्मये गुच्छे प्रकृतग्रन्थस्योपलब्धेश्च अयमपि शङ्करनारायणकर्तृक इति युक्तमनुमातुम्। यदमी ग्रन्थाः पृथगेव गुच्छविशेषे तदन्वयसञ्जातैश्चिराद् रक्षिताः तद्धेतुरेतेषां स्वपूर्वजकर्तृकत्व-प्रयुक्त आदरविशेष एवेति युक्तिरपीह सहकारिणी भवति नः।
- प्रकृतग्रन्थस्य ये द्वे मातृके साम्प्रतमुपलब्धे ते द्वे अपि प्रागुक्तज्योतिषिकवंशेन पारम्पर्यप्राप्ते। एतद्विषया कापि मातृका महता यत्नेनापि नान्यत्र क्वाप्यस्माभिरुपलब्धा।
- सर्वेषु ग्रन्थेषु 'श्रीनृसिंहभारतीगुरुभ्यो नमः' इत्याकारकं समानं गुरुवन्दनं विहितमुपलभ्यते। तदपि षण्णामेतेषां समानकर्तृकत्वं शृङ्गगिर्यभिजनकर्तृकत्वं च अनुमापयति।[9]

- गणिततगन्नडिव्याख्यायाः ग्रहणमुकुरव्याख्यायाश्च भाषा महत् साम्यं भजते।

अथैतन्निर्णये प्रतिकूला द्वित्रा अंशाः यथा –

- शङ्करनारायणज्योतिषिणा सर्वेषु निजग्रन्थेषु स्वं नाम उल्लिखितं दृश्यते, किञ्च ग्रहणमुकुरः तद्व्याख्या च अनामिका। अस्यापि स एव कर्ता स्याच्चेद् अवश्यमेव तेन स्वनामोल्लिखितं भवेत्।
- Census of the Exact Sciences in Sanskrit इत्यस्यां कृतौ विद्दणाचार्यस्य कृतीनां विवृतौ "Mysore and Coorg 278. No granthas given. Incomplete (grahanamukura). Property of Mahadeva Joyisa of Sringeri." (Pingree, 646)इत्युल्लिखितं वर्तते।[10] अनेन ग्रहणमुकुरकृतिः विद्दणाचार्यकर्तृकेत्यर्थो व्यज्यते।
- प्रकृतग्रन्थे इसवीयं 1468 तमं वर्षं ध्रुवकं विधाय गणितजातं निगदितम्।[11] करणग्रन्थास्तु स्वासन्नं कञ्चन कालविशेषम् आद्यबिन्दुं विधाय तात्कालिकान् स्फुटग्रहान् ध्रुवकरूपेण प्रदाय च ततः परम् इष्टेनाहर्गणेन ग्रहसाधनविधिम् उपदिशन्ति। तेषामियं प्रकृतिः गणितलाघवाय प्रकल्पिता विद्यते। अत्र 1468 तमं वर्षं ध्रुवकं कृतमिति कृत्वा प्रकृतो ग्रन्थः ततो नात्यन्तमर्वाचीनः। तदेतत् कालविषये प्रबलं प्रमाणम्। अतोऽस्य कालः 1480-1500 तमं सामान्यशकवर्षम् इति शक्यमनुमातुम्। करणाभरणादीनां चतुर्णां रचयिता शङ्करनारायणजोयिसस्तु ततोऽप्यर्वाचीनः। तेषु करणाभरणं 1603 तमे, गणिततगन्नडि 1604 तमे, तन्त्रदर्पणः 1601 तमे च सामान्यशकवर्षे सम्पन्नताम् अगादिति स्वयमुज्जुघोष किल ग्रन्थकारः। एवं कालभेदादसौ ग्रन्थो न शङ्करनारायणकर्तृक इति सिद्ध्यति।

अथात्र स्वमतं निर्णयरूपेण निगद्यते –

- विद्दणाचार्यस्य स्पष्टः कालः अनिश्चितश्चेदपि स 1350 तमात् वर्षात् प्राग् बभूवेति निश्चप्रचम्। ग्रहणमुकुरस्तु 1468 तः अर्वाचीनइति प्रागुक्तमेव। तस्मादस्य विद्दणाचार्यकर्तृकत्वं दूरापास्तम्।
- प्रकृते ग्रहणमुकुरग्रन्थे संस्कृतमूलं कन्नडव्याख्या चेति द्वौ भागौ विद्येते। मूलस्य ऊहितः कालः शङ्करनारायणजोयिसतः बहुपूर्व इति कृत्वा न तस्य तत्कर्तृकत्वं घटते। किञ्च यद्व्याख्यानं तदमुष्यैवेति कथनं नायुक्तं भवेत्।
- शङ्करनारायणजोयिसः निजग्रन्थेषु पितरं वासवगुरुसमान इत्यादिभिर्विशेषणैः स्तौति। तदेतत् तत्पितुः गणकाग्रणीत्वं पिशुनयति। तेन लिखिता जातकालङ्कारस्य प्रतिकृतिः या प्राप्ता सा 1529तमे शालिवाहनशकवर्षे पूर्णतामगादिति उल्लिखितमस्ति। तदनुसारेण स 1608तमं सामान्यशकवर्षं यावदपि सारस्वतक्रियारत आसीदित्यवसीयते। अतः सोऽपि 1550 तः प्राक्तनो भवितुं नार्हति। ग्रन्थोऽयं 1480-1500 सामान्यशकमभितः प्रणीत इति प्राक्प्रतिपादितमेव। तथा चायं शृङ्गगिर्यभिजनेनैव प्रणीत इति स्फुटमेव।[12] तदेतज्जोयिसकुलमपि गणकाग्रणीनां प्रभव इति नानुचितमनुमातुम्। कुलकथनपरो जोयिसशब्दोऽपि ज्योतिषशब्दस्य किल रूपान्तरम्। अतो देमणजोयिसस्य पित्रा पितामहेन वा मूलमिदं प्रणीतं भवेत्।
- तदेभिः सर्वैरप्यंशैः मूलं ग्रहणमुकुरं देमणजोयिसस्य पिता पितामहो वा 1480-1500 तमे सामान्यशके प्रणिनाय, कन्नडव्याख्यां च शङ्करनारायणजोयिसः 1600-1610 तमे सामान्यशके लिलेख इति सम्प्रत्यलं निश्चेतुम्।

इति विवेचितौ कर्तृकालौ। अथ देशः। अथात्र ग्रन्थोऽयं शृङ्गगिरिमूल इति वक्तुं कानिचन प्रमाणानि सन्दृभ्यन्ते।

- उपलभ्ययोः ग्रहणमुकुरमातृकयोः ग्रन्थारम्भे[13] भगवतो विद्याशङ्करस्य विद्यातीर्थमहेश्वरस्य च वन्दनं विहितमस्ति। श्रीश्रीविद्यातीर्थश्रीचरणाः शृङ्गेरीश्रीशारदापीठस्य दशमपीठाधिपतय आसन् (1229-1333 ष्टश्च)। महायोगिनस्ते लम्बिकायोगेन समाधिमगमन्। यत्रतैः समाधिरास्थितस्तत्र किञ्चन शिवलिङ्गम् आविर्बभूव तेनैव हेतुना स विद्याशङ्कर इति पप्रथे च। अमुष्यानुभावेन परिचितैरुत्तरवर्तिभिः 1338तमे वर्षे तत्र कश्चन देवालयो निरमायि योऽधुना विद्याशङ्करनाम्ना प्रथते। ग्रन्थारम्भे विहितमन्यद् वन्दनं श्रीश्रीनृसिंहभारतीगुरूणाम्। येऽत्र ग्रन्थकर्तारः अनुमिताः तत्कालेषु नृसिंहभारतीनामकाः पीठाधिपतयोऽपि तत्र बभूवुः।[14]
- ग्रन्थेऽस्मिन् मत्तेभविक्रीडितेन महास्रग्धरया च निबद्धम् एकैकं पद्यम् उपलभ्यते। एते वृत्ते संस्कृतमूले चेदपि दाक्षिणात्यकृतिषु प्रसिद्धे। विशिष्य महास्रग्धरा संस्कृते प्रसिद्धेषु छन्दोग्रन्थेषु नोल्लिखिता दाक्षिणात्यसाहित्यानभिज्ञानां न परिचिता च। तदेतदपि ग्रन्थस्यास्य दक्षिणदेशभवत्वं व्यनक्ति।
- ग्रन्थस्य द्वे एव मातृके उपलब्धे ये तद्वंशभवैरेव रक्षिते।

तदेतैरंशैः इदं स्फुटति यदसौ कृतिः शृङ्गगिरौ लब्धजन्मा, तदन्यत्र न कदापि कृतपदा चेति।

### 5. मातृकाधिकरणम्

अस्य ग्रन्थस्य सम्पादने द्वे मातृके अस्माभिरुपयुक्ते, ये उभे अपि जोयिसकुलसंरक्षितताडग्रन्थराशिलब्धे। विभिन्नेषु हस्तप्रतिसङ्ग्रहालयेषु अनुसन्धानकेन्द्रेषु च भृशमन्वेषणे विहितेऽपि नैकाप्यस्य

प्रतिकृतिर्हस्तप्राप्या सञ्जाता। यत्रास्माभिरन्वेषणं व्यधायि तेषु कानिचिदधस्तादुदाह्रियन्ते –

1. Government Oriental Manuscripts Library, Chennai
2. Oriental Research Institute, Mysore
3. Manuscripts Library atKeladi(popularly known as KeladiGunda) under Kuvempu University, Karnataka
4. Joyisa Museum, AdvaitaShodha Kendra, Sringeri

उपलब्धयोर्मातृकयोः सुस्थितेर्न कोऽपि भागो नष्टोऽस्पष्टो वा वर्तत इति महद् भागधेयं नः।

### 6. ग्रन्थपरिचयः

ग्रन्थस्यास्य नाम व्यक्तं ब्रूते यदिदं ग्रहणगणितमेव लक्ष्यीकृत्य प्रवृत्तमिति। तथा च ग्रन्थस्यास्य अवतरणिकायाम् 'ई करणदल्लि ग्रहणव गुणिसि परिलेखनव बरदु नोडलागि कन्नडियोळगे तोरिद हागे व्यक्तवागि काण बन्धीतागि ग्रहणमुकुरवेंब हेसरु– अस्मिन् करणग्रन्थे ग्रहणगणितं विधाय परिलेखनं विलिख्य च वीक्षिते सति मुकुरे इव व्यक्तं सर्वं नेत्रपात्रीभवतीति कृत्वा अस्य ग्रहणमुकुर इति नाम' इत्येषा व्याख्यातृवाणी अमुष्य ग्रन्थस्य नामौचित्यं साधु विवृणोति। ग्रन्थश्चायं सप्तभिरध्यायैरुपनिबद्धः। अथ प्रत्येकमध्यायः तत्रत्यं विषयजातं च समासेन परिचाययिष्यते।

#### 1. मध्याधिकारः

अध्यायोऽयं मध्यमानां ग्रहाणां साधनार्थं प्रवृत्तोऽस्ति। अत्र हि केवलं रवि-रविमन्दोच्च-चन्द्र-चन्द्रमन्दोच्च-राहूणां मध्यमानयनम् उपदिष्टं तेषामेव ग्रहणगणिते प्रस्तुतत्वात्। तथा च तत्रावश्यकाः इष्टाहर्गणसाधनम्, स्फुटभूपरिधिज्ञानम्, देशान्तरसंस्कारः, तात्कालिकीकरणं चैतेऽपि विषया इह प्रोक्ता विद्यन्ते।

#### 2. ग्रहस्फुटाधिकारः

प्रथमाध्यायोक्तविधिना प्राप्तानां मध्यमग्रहाणां स्फुटीकरणम् अस्याध्यायस्य विषयः। अतस्तत्रापेक्षितं ज्याखण्डजातम्, इष्टचापतो ज्यानयनम्, इष्टज्यायाश्चापकरणम्, भुजफलानयनम्, तस्य ग्रहे संस्कारः, स्फुटगतिसाधनम्, तिथ्यानयनं च अध्यायेऽस्मिन् प्रपञ्चितमस्ति।

#### 3. छायाधिकारः

अयनांश-अक्षांश-क्रान्त्यंशाः, पलभा, चरासवः, दिनरात्रिमाने, चन्द्रस्य चरासवो दिनरात्रिमाने च, नतोन्नतकालौ, राशीनां स्वदेशीयोदयासवः, लग्नं चैतेषां साधनम् अस्मिन्नध्याये विवृतमस्ति। तथा चायम् अध्यायः सिद्धान्तग्रन्थेषूपनिबध्यमानं त्रिप्रश्नाधिकारम् अनुसरति। त्रिप्रश्नाधिकारप्रतिपाद्या अन्ये विषयास्तु ग्रहणगणिते अनुपयोगित्वात् परित्यक्ता इति सुबोधमेव।

#### 4. सोमग्रहणाधिकारः

अस्मिन्नध्याये ग्रहणसम्भवज्ञानम्, ग्रहणगणिते आवश्यकानां तात्कालिकानां रवि-चन्द्र-चन्द्रशराणां रविचन्द्रभूभाबिम्बानां च साधनम्, ग्राह्यग्राहकज्ञानम्, ग्राससमानं तेन ग्रहणप्रमाणविवेकश्च, स्थित्यर्ध-विमर्दार्धयोः साधनम्, ताभ्यां स्पर्श-सम्मीलन-उन्मीलन-मोक्षकालानां ज्ञानम्, ग्रहणे इष्टकाले ग्राससमानज्ञानं ग्रासेन इष्टकालज्ञानं च, वलनानयनं तेन ग्रहणे स्फुटदिग्ज्ञानं च, मान्यैक्यार्धादीनाम् अङ्गुलात्मना परिणामनम्, ग्रहणे वर्णज्ञानं चैते विषयाः सन्दृब्धा विद्यन्ते।

#### 5. सूर्यग्रहणाधिकारः

लम्बनेन तिथ्यन्तस्य नत्या शरस्य च स्फुटीकरणं किल सूर्यग्रहणे चन्द्रग्रहणाद् विशेषः। तदनुरोधेन लम्बन-अवनत्योः साधनम्, ताभ्यां क्रमेण पर्वान्तकालस्य चन्द्रशरस्य च स्फुटीकरणम्, ततः स्थित्यर्धस्फुटीकरणम्, ततश्च स्फुटानां स्पर्शादिकालानां ज्ञानं चात्र निरूपितमस्ति। अध्यायान्ते परिलेखनोपयोगि वर्णज्ञानं ग्रहणदिग्ज्ञानं चापि विवृतमस्ति।

#### 6. दिक्परिज्ञानाध्यायः

लघुतमेऽस्मिन्नध्याये दिङ्निर्णयं बोधयन्ती पञ्चश्लोकी वरीवर्ति। समधरातले शङ्कुनिवेशनम्, ततश्छायया स्थूलयोः पूर्वापरयोर्ज्ञानम्, ताभ्यां याम्योत्तरयोर्ज्ञानम्, ताभ्यां पुनः सूक्ष्मयोः पूर्वापरयोर्निर्णयश्च अस्याध्यायस्य विषयाः। तदेतद् दिग्ज्ञानं परिलेखनविधावावश्यकमिति कृत्वा तत्कथनपरस्याध्यायस्य इह न्यासो युक्त एव।

#### 7. परिलेखनाध्यायः

ग्रहणपरिलेखनिरूपणपरेऽस्मिन्नध्याये तत्रावश्यकानां वलनाश्रयवृत्तं समासवृत्तं ग्राह्यवृत्तं चेति त्रीणि वृत्तानि, परिलेखे वलनदिङ्निर्णयः, समासवृत्ते प्रथमान्त्यबिन्द्वोः दानम्, परिलेखेशरदानम्, स्पर्शमोक्षभाग-ज्ञानोपयोगि-सूत्रकरणम्, स्पर्शमोक्षभागयोःज्ञानम्, वलनदानम्, वृत्तेग्राससमानज्ञानम्, परिलेखे ग्राहकमार्गज्ञानम् इष्टाङ्गुलग्रासज्ञानं निमीलनोन्मीलनस्थानज्ञानं चैतेषां विषयाणां समावेशः कृतोऽस्ति।

### 7. ग्रन्थवैशिष्ट्यानि

ग्रहणगणितमेव विषयीकृत्य प्रवृत्ता ग्रन्था नाधिकं दृग्गोचरीभवन्ति। तथाभूतेषु वैरल्यलभ्येषु ग्रन्थेष्वन्यतमत्वम् अस्य ग्रन्थस्य प्रमुखो विशेषः। विशिष्य ग्रन्थोऽयं परमेश्वरदैवज्ञप्रभाव-भावितो भवितुमर्हति यतः स ग्रहणावलोकनचणः प्रकृतग्रन्थान्नातिपूर्वं बभूव। अन्ये केचन विशेषाः क्रमेण प्रस्तूयन्ते।

#### 7.1 करणसरणेरनुसरणम्

सिद्धान्तस्कन्धे करणम् इति नाम्ना प्रसिद्धः कश्चिदस्ति प्रकारो यत्र स्फुटग्रहादीन् लाघवेन सम्प्राप्तुं विधयोऽभिधीयन्ते। ब्रह्मगुप्तप्रणीतं खण्डखाद्यकं भास्करप्रणीतं करणकुतूहलं चात्रोदाहर्तुं युक्तम्। प्रकृतोऽपि ग्रन्थो ग्रहणगणितं लाघवेन विधातुं प्रवृत्तोऽस्ति। अतोऽत्र करणग्रन्थानां रीतिः शक्या द्रष्टुम्, यथा –

- रामाङ्गनागवसुषड्रसभूमितं (1668863) कल्याद्यहर्गणं ध्रुवकं प्रकल्प्य तदानीन्तनान् रव्यादीनां स्फुटान् प्रदाय च ततः इष्टाहर्गणानुसारेण मध्यमग्रहसाधनम् इह निगद्यते।
- मध्यमग्रहसाधनाय लाघवोपेता उपाया इह निगद्यन्ते। यथा अहर्गणः एकत्रिंशता गुणितः 11323 संख्यया भक्तश्च भगणादिकं फलं ग्राह्यम्। पुनरहर्गणम् उत्कृतिगोगजैर्भक्तं कृत्वा फलं कलादिकम् आदाय च पूर्वप्राप्तात् भगणादिफलात् शोध्यम्। लब्धो भगणादिकोमध्यमरविर्ग्राह्यः।
- स्पष्टाधिकारे नवैव ज्याखण्डानि पठितानि। सिद्धान्तग्रन्थेषु तानि चतुर्विंशतिसंख्याकानि पठ्यन्ते।

एवमनेन लाघवप्रधाना करणसरणिरनुसृतेति निश्चप्रचम्। एतल्लाघवं साधयितुं ग्रन्थकृता नव्या विधयो भवन्त्युपज्ञातव्याः। एतेषां नवीनविधीनां विधानं तदीयंगणितचणत्वं विशदयति।

### 7.2 सूर्यसिद्धान्तस्यप्रभावः आर्यभटीये आदरश्च

प्रायः सर्वे ग्रन्थकाराः प्राञ्चं कञ्चन ग्रन्थम् आधारीकृत्य निजगणितनैपुण्या नव्यान् ग्रन्थान् प्रणयन्ति। विशिष्य सूर्यसिद्धान्त-आर्यभटीय-ब्राह्मस्फुटसिद्धान्ताः भूयसां ज्योतिर्विदां श्रद्धाविषयताम् अभजन्त। यथा लल्ल-श्रीपति-भास्कराः ब्रह्मगुप्तीयां सृतिमनुसस्रुः। कमलाकरस्तु सूर्यसिद्धान्तं प्रमाणं मन्वानस्तद्विरुद्धान् सर्वानप्यभिप्रायान् साधिक्षेपं प्रत्याख्याति। परमेश्वरप्रभृतयो गाणितिकास्तावद् आर्यभटीयपद्धयौ पदं निदधुः तां वर्धयामासुश्च।

तदनया दृष्ट्या अनुशीलिते सति प्रकृतग्रन्थः सूर्यसिद्धान्तानुसारीति स्फुटं वेद्यो भवति। आर्यभटे समादरोऽपि बहुत्र विलोकितुं शक्यः। अत्र सहकारिणोंऽशाः यथा -

#### ■ आर्धरात्रिकाणां मध्यमग्रहाणां साधनम् ( 1.5 )

सूर्यसिद्धान्ते इष्टदिवसे मध्यरात्रकाले मध्यमा ग्रहाः सम्पाद्यन्ते, यथोक्तं'लङ्कायामार्धरात्रिक' इति।[15] ब्रह्मगुप्त-श्रीपति-भास्करप्रभृतयस्तु प्रथमम् औदयिकान् ग्रहान् सम्पादयन्ति। तदुत्तरं गतगम्यघटीभिः तेषां तात्कालिकीकरणं सर्वत्र समानमेव। तथा चास्मिन् विषये विद्यन्ते सम्प्रदायभेदाः (शेखरवैशिष्ट्यम्, श्लश्ल 41-43)। तथा च यदिह इष्टकालिकग्रहसाधने आदौ तद्दिने अर्धरात्रकालिका मध्यमग्रहाः सम्पाद्यन्ते तदेतत् सूर्यसिद्धान्तानुसारि।

#### ■ सूर्यसिद्धान्तोक्तो मध्यमभूपरिधिः( 1.15 )

प्रकृतग्रन्थोक्तं खाङ्गखबाणयोजनमितं (5060) भूपरिधिमानम् अपि सूर्यसिद्धान्तसंवादि। विषयेऽस्मिन् ग्रन्थान्तरेषु विलोक्यन्ते विसंवादाः। यथा सिद्धान्तशिरोमणौ प्रोक्तानि भूपरिधियोजनानि सप्ताङ्गनन्दाब्धयः (4967)। केतकीग्रहगणिते तु तानि शून्याभ्रतत्त्वमितानि(2500) पठितानि (केतकीग्रहगणितम् 1.11)। आर्यभटीये यो भुवो व्यासो निगदितस्तदनुरोधेन तत्परिधिः 4743 योजनमितः सिध्यति (आर्यभटीयम् 1.5)। नीलकण्ठसोमयाजिना च तन्मानं 3299 योजनानीत्याख्यातम् (सिद्धान्तदर्पणः 14)। देशभेदेन कालभेदेन च योजनमानं व्यत्यस्तं भवितुम् अर्हति, येन भूपरिधिमानेऽपि भिन्नानि मतानि दृश्यन्ते।

#### ■ कियद्भागाधिकोने स्थिते( 4.1 )

ग्रहणसम्भवज्ञानंविवृण्वन्नाहप्रकृतग्रन्थकारः 'राहौभानु-शशाङ्कयोस्तुलितगेषड्भान्तरेवागतेविश्वांशैरधिकोनकेऽपि च कियद्भागाधिकोनेस्थिते' (4.1)इति। इहविश्वांशैरिति गदितवतापि ग्रन्थकृता पुनः कियद्भागाधिकोने इति कथनं तदीयं सूर्यसिद्धान्तादरं पिशुनयति। यतस्तत्रापि कियच्छब्दः प्रयुक्तोऽस्ति[16] यस्य कटपयादिविधिना एकादशार्थकत्वमपि गृह्णन्ति गाणितिकाः। इह 'विश्वांशैः' इत्युल्लिख्य पुनः कियद्भाग इति कथनमप्यवधानार्हं नः।

#### ■ आर्यभटसाम्यम्

ग्रहणमुकुरे मध्यमाधिकारे आर्यभटीयेन तुल्यानां ग्रहाणां साधनम् उपदिष्टं यथा -रविर्भवेदङ्कलासमेतः शशीनखोनः षडगोनतुङ्गः। विधुन्तुदोगोनवलिप्तिहीनस्तदाग्रहस्यार्यभटस्यसाम्यः (1.11)॥ उत्तरत्र रविमन्दोच्चस्थानं 78 अंशा इति प्रोक्तम् - गजाश्वलवाइनोच्चम् (1.2)। एतद्विवृण्वता व्याख्यात्रा तदिदम् आर्यभटादिसिद्धान्तसंवादि भणितमित्यभ्यधायि। अनेन असौ ग्रन्थकर्ता आर्यभटम् आद्रियत इति गम्यते।

वस्तुतोऽनयोः सूर्यसिद्धान्तार्यभटीययोः न महान् विद्यते मतभेदः। तथाप्येतदवधेयं यदस्मदनुमिते प्रकृतग्रन्थप्रणयनकाले आर्यभटीयं परमेश्वरदैवज्ञकृतेन वाक्यकरणेन दृक्साम्यं भजते स्म। तस्मादसौ ग्रन्थकारः सूर्यसिद्धान्ते बद्धश्रद्धश्चेदपि दृक्समतासिद्ध्यै आर्यभटीयरीत्या सिद्धान् ग्रहान्जग्राहेति सुवचम्। तदेतत् स्फुटग्रहावाप्तिरेव तदीयं परमं लक्ष्यं न कस्यचन सिद्धान्तस्यानुसरणम् इति स्फुटीभवति।

### 7.3 अन्ये विशेषाः

#### 1. पलभानयने विभिन्नो विधिः

प्रकृतकृतौ छायाधिकारे पलभासाधनम् अभिहितं यथा -

**भानौमेषतुलादिगेद्युदलजेछायेयुतेचार्धिते**

**स्यात्तद्देशपलप्रभा ( 3.2 )**

अत्रोपदिष्टो विधिः प्रसिद्धात् किञ्चिद् भिन्नः। सायनसूर्ये मेषादौ तुलादौ वा स्थिते मध्याह्नकाले द्वादशाङ्गुलशङ्कोः छाया पलभेति किल प्रसिद्धिः। परन्तु तत्सूक्ष्ममानं तदैव सिद्ध्यति यदा सायनसङ्क्रान्तिः मध्याह्ने तदासन्ने वा काले स्यात्। अन्यथा तु मध्याह्नकाले पुनः किञ्चित् क्रान्तिः सम्भवतीति कृत्वा तदानीता पलभा स्थूलैव स्यात्। अतः सूक्ष्मतार्थं द्वितीयार्यभटश्रीपत्यादिभिः कैश्चिदयं विधिरुपदिष्टः। (शेखरवैशिष्ट्यम्, pp 85-88)। किञ्च अनेनापि सूक्ष्मत्वं न सिध्यतीति सुवेद्यमेव गोलविदाम्। वस्तुतस्तु, यदा सायना मेषसङ्क्रान्तिः तुलासङ्क्रान्तिर्वा मध्याह्ने तदासन्नकाले वा भवति तद्दिवसीया माध्याह्निकी छाया पलभेति वक्तव्यम्। विस्तरार्थं शेखरवैशिष्ट्यं द्रष्टव्यम्।

ISSN 2456-3420

**2. विश्वाल्पांशे ग्रहणसम्भवः**

यदा ग्राह्यबिम्बस्य पातस्य च राश्यादिना सर्वथा साम्यं त्रयोदशभ्यः अंशेभ्य ऊनम् अन्तरं वा भवति तदा ग्रहणसम्भव इति निगदति ग्रहणमुकुरकारः (4.1)। अत्र ग्रहणसम्भवे ग्राह्य-पातयोः गरिष्ठम् अन्तरं त्रयोदशांशमितं यद् गृहीतं तन्मनागिव विचारार्हम्। तत्रादौग्रहणसम्भवार्थं ग्राह्य-पातयोः गरिष्ठम् अन्तरं ग्रन्थान्तरेषु कियन्मितम् अभिहितम् इति विलोकयेम -

| | |
|---|---|
| सूर्यसिद्धान्ते | -एकादशांशाः[17] |
| आचार्यभास्करः (1114 CE) | - चतुर्दशांशाः[18] |
| परमेश्वरदैवज्ञः (1410 CE) | -चन्द्रग्रहणेत्रयोदशांशाः, सूर्यग्रहणेएकादशांशाश्च[19] |
| कमलाकरभट्टः (1658 CE) | -चतुर्दशांशाः[20] |
| वेङ्कटेशकेतकरः (1916 CE) | - त्रयोदशांशाः[21] |

अत्रेदमवधेयं यद् ग्रहणमुकुरात् प्राक्तनेष्वाचार्येषु केवलं परमेश्वरभट्टः त्रयोदशांशमितम् अन्तरंप्रोवाचेति। प्रकृतग्रन्थकारेण परमेश्वरः साधु पठितः तदीयं पञ्चपञ्चाशद्वर्षकालिकं तपः समादृतञ्चेति स्फुटीभवत्यनेन।

**3. वृत्तवैविध्यं विरलप्रचुराणां वृत्तानां प्रयोगश्च**

नानावृत्तमयत्वं प्रकृतग्रन्थस्य अपरो विशेषः। तदेतद् वृत्तवैविध्यं न केवलम् अध्येतृन् मोदयति किञ्च ग्रन्थपङ्क्तीनां धारणायामपि बलवदुपकरोति। तत्रापि मेघविस्फूर्जितं शुद्धविराट् मत्तेभविक्रीडितं महास्रग्धरा चैतेषां नितान्तविरलानां वृत्तानां प्रयोगो विशेषेणावधेयः। यथा -

- शुद्धविराट् - भानोर्बाहुफलंकलादिकम् (2.8)
- मेघविस्फूर्जितम्- खसूर्यास्तर्काङ्काः खजलनिधयः स्वाक्षभाघ्नाः क्रमात्ते (3.4)
- मत्तेभविक्रीडितम्-अ) अधिकाल्पेग्रहणादिमोक्षहरिजेप्राह्णे भवेतां च ते (5.6),
  इ) फलकेवावलनाश्रयाख्यवलयं खाब्ध्यङ्गुलैः संमितं (7.1) च
- महास्रग्धरा-शशिनःस्पर्शे च बाहुः स्ववलनसरणौप्राचिमोक्षे च पश्चात् (7.19)

विशिष्य मत्तेभविक्रीडित-महास्रग्धरे दाक्षिणात्यसाहित्य-प्रसिद्धे। महास्रग्धरा तावत् प्रसिद्धेषु छन्दोग्रन्थेष्वपि न गोचरीभवति।

एवमाख्याताः प्रकृतग्रन्थगताः केचन विशेषाः। ग्रहणगणिते परिलेखने च साम्प्रदायिक एव पन्थाः समाश्रितोऽस्तीति हेतोर्न कश्चिदत्र कथाप्रसङ्गः।

**उपसंहारः**

इत्थं ग्रहणमुकुरसम्बद्धाः केचन विशेषा इहसमाख्याताः। अयं ग्रन्थो विद्दणाचार्यविरचित इति यत् कैश्चिदभिहितं तत् सयुक्तिकं प्रत्याख्याय ग्रन्थस्य देशकालकर्तृनिर्णयः सोपपत्तिकम् इह विहितो वर्तते। एतदीयानि गणितादिवैशिष्ट्यान्यपि इह यथामति प्रपञ्चितानि, यान्यस्य गणकोपकारिताम् आम्रेडयन्ति। ग्रहणैकविषयकेषु विरलतमेषु ग्रन्थेष्वयमन्यतम इत्यंशोऽपि विशेषेणात्र गणकैरवधेयः। ज्यौतिषग्रन्थानां व्याख्याः लोकभाषास्वपि चिरात्प्रणीयन्ते स्मेति तथ्यमप्यनेन स्फुटितं भवति। तदमीभिर्वैशिष्ट्यैरियं कृतिरसंशयं ज्योतिर्विदामुपादेया भवतीति शम्।

## References

**Primary Sources**

- *Âryabhamîyabhâcya* of Nîlaka Gmha Somayâji. (Ed. Úâstri, K. Sâmbaúiva). Trivandrum Sanskrit Series, 1930.
- *GaGitagannai* of ŒaEkaranârâyaGaJoisaru. (Ed. Shylaja, B.S. and Javagal, Seetharama). Bengaluru: Navakarnataka Publications Private Ltd., 2021.
- *GrahaGamaGanam*of Prameœvara. (Ed. Sarma, K.V.). Hoshiarpur: Vishveshvaranand Vedic Research Institute, 1965.
- *KaraGâbharaGam* of Œa Ekaranârâya GaJoisaru. (Ed. Mahesh, K. and Javagal, Seetharama). Tirupati: Rashtriya Sanskrit Vidyapeetha, 2020.
- *Ketakîgrahagaitam* of Venkatesh Ketkar. Delhi: Bharatiya Vidya Prakashan, 2001.
- *SiddhântadarpaGam* of NîlakaGmha Somayâji. (Ed. Sarma, K.V.). Hoshiarpur: Vishveshvaranand VishvaBandhu Institute of Sanskrit and Indological Studies, Panjab University, 1976.
- *SiddhântaúiromaGi* of Bhaskaracharya.(Ed. Somayaji, D. Arka). Tirupati: Rashtriya Sanskrit Vidyapeetha, 2000.
- *Sûryasiddhânta.* (Ed. Burgess, E.). Delhi: New Bharatiya Book Corporation, 2015.

**Secondary Sources:**

- Dahâl, LokamaGi. *Bhâratîyajyotiúúâstrasyetihâsa*. Varanasi: Chaukhamba Surabharati Prakashan, 1990.
- Pejathaya, Ramakrishna. *Œekharavaiœicmyam.* Udupi: SMSP Sanskrit Research Centre, 2016.
- Pingree, David Elwin. *Census of Exact Sciences in Sanskrit*. Vol. IV. Philadelphia: American Philosophical Society, 1994.

ISSN 2456-3420

## सन्दर्भसूची-

1 ग्रन्थोऽयं ब्रह्मगुप्तकर्तृक इति उल्लिखति तत्रभवान् डेविड् पिङ्ग्री। किञ्चास्य साम्प्रतमनुपलब्धेर्नाधिकं शक्यं वक्तुम्।

2 परमेश्वरस्तु ..... पञ्चपञ्चाशद्वर्षकालं निरीक्ष्य ग्रहणग्रहयोगादिषु परीक्ष्य समदृग्गणितंकरणं चकार। (आर्यभटीयभाष्यम्, 154)

3 अयमंशोऽपि अस्या: कृते: देशकालनिर्णये सहकरोति यच्च उत्तरत्र तत्प्रसङ्गे विवरिष्यते।

4 योऽयम् अस्य पुस्तकस्य सम्पादकेषु अन्यतम:।

5 अयं 'जोयिस' इति शब्द: कर्णाटकेषु प्रसिद्ध:, 'ज्योतिषी' इत्यस्मात् संस्कृतशब्दादुत्पन्नश्च।

6 कुलपतिशङ्करनारायनजोयिसै: स्वजीवनस्य तुरीये चरणे ताडग्रन्थानां पञ्च गुच्छानि स्वस्मिन् संस्थाप्य तदितराणि सर्वाणि श्रीमठस्य शोधकेन्द्रं प्रति समर्पितान्यासन्। तेषु पञ्चसु एकस्मिन् गुच्छे एते सिद्धान्तज्यौतिषसम्बद्धा ग्रन्था उपलब्धा अभूवन्निति भाव:।

7 अयं प्रागुक्तात् कुलपतिशङ्करनारायणजोयिसाद् भिन्न:। तदीयं विवरणम् उत्तरत्र प्रदास्यते।

8 यथोक्तं करणाभरणस्य प्रास्ताविकपद्ये -
देमणगणकसुतोऽहंशङ्करनारायणोऽस्यकरणस्य।
करणाभरणाख्यमिदंव्याख्यानंख्यातयेकरिष्यामि॥
(करणाभरणम् 1.2)
गणितगन्नडिकृतौ प्रत्यध्यायं प्रयुक्ता पुष्पिका (colophon) यथा -
इन्तु शृङ्गपुरवास वासवगुरुसमान देमणज्योतिषाग्रगण्य-सुधार्णवपूर्णचन्द्रनाद। अव्युत्पन्नगणकपन्नगसुपर्ण शङ्कर-नारायणज्योतिषनिन्द विरचितमप्प गणितगन्नडियेनिसिप। वार्षिकतन्त्रद कर्णाटभाषाव्याख्यानदोळु ग्रहस्फुटा-धिकारवेनिप द्वितीयाध्याय समाप्तवायितु। (गणितगन्नडि, p. 18)
अथ ग्रहणरत्नस्य मङ्गलपद्यं यथा -
श्रीगुरुचरणसरोजं धृत्वा निजशिरसि देमणाब्धिविधु:।
शङ्करनारायण इह शृङ्गेर्यां ग्रहणरत्नमाकलये ॥
(ग्रहणरत्नम् 1.1)
अथ तन्त्रदर्पणे कर्तुरुल्लेखो यथा -
इति श्रीमच्छृङ्गपुरीनिवासवासवगुरुसमानदेमणज्योति-र्विदात्मजेन शंकरनारायणेन विरचिते तन्त्रदर्पणाभिधाने वार्षिकव्याख्याने चन्द्रशृङ्गोन्नतिपरिज्ञानं नाम अष्टमोह्यध्याय: परिसमाप्त: ॥ (तन्त्रदर्पण:, पुष्पिका)

9 नृसिंहभारतीगुरुविषये ग्रन्थकर्तृदेशविषये च उत्तरत्र वक्ष्यते।

10 अत्र पिङ्ग्रीमहाशयेन उल्लिखितो महादेवजोयिस: कुलपतिशङ्करनारायणजोयिसस्य (1903-98) पितामह:। तदेतत् तद्वंशवृक्षेण स्फुटीभवति।

11 गुणाङ्गनागे भरसाङ्गभूमितेगते दिनौघे सति जीववासरे।
निशार्धगानर्कविधूच्चभोगिनां ध्रुवान्सुसिद्धान्त-समान्करोम्यहम्॥ (ग्रहणमुकुर: 1.5)

12 तदेतदुत्तरत्र विव्रियते।

13 श्रीगणाधिपतयेनम:। श्रीसरस्वत्यैनम:। श्रीगुरुभ्योनम:। श्रीविद्याशङ्करायनम:। श्रीनृसिंहभारतीगुरुभ्योनम:। निर्विघ्नमस्तु। यस्य निश्वसितं वेदा यो वेदेभ्योह्यखिलं जगत्। निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

14 21st Sri Nasimhabharati - III (1560-1573), 22nd Sri Nasimhabhâratî - IV (1573-1576), 23rd Sri Nasimhabhâratî- V (1576-1599)× 24th Sri Abhinava Nasimhabhâratî I (1599-1623)

15 आर्यभटस्तु अर्धरात्रसमये अर्कोदये चोभयत्र दिनप्रवृत्तिम् अङ्गीकरोतीति मिहिरोक्ति:। यथा च पञ्चसिद्धान्तिकायाम् -लङ्काऽर्धरात्रसमये दिनप्रवृत्तिं जगाद चार्यभट:। भूय: स एव चार्कोदयात् प्रभृत्याह लङ्कायाम् (15.20)। किञ्चार्यभटीये एतद्विषये स्फुटोक्ति: कापि नोपलभ्यते। तस्मात्तदीयं मतमिह न गृहीतम्।

16 शशाङ्कपातेग्रहणंकियद्भागाधिकोनके (सूर्यसिद्धान्त: 4.6)

17 शशाङ्कपाते ग्रहणं कियद्भागाधिकोनके। वस्तुतोऽत्र स्फुटं कापि संख्या नोक्ता। तथापि कियच्छब्दस्य कटपयादिविधिना एकादशार्थकत्वं गृह्यते विद्भि:।

18 मनूनका: स्याद् ग्रहणस्य सम्भव: (सिद्धान्तशिरोमणि: 4.2)

19 राहूनार्कभुजांशा विश्वोनाश्चेन्निशापतेश्चिन्त्यम् ॥
ग्रहणं, ते सपलाङ्गुलरुद्रोनाश्चेत् तथा सवितु:। (ग्रहणमण्डनम्, 30, 31a)

20 सपातचन्द्रस्य भुजांशकाश्चेदिन्द्राल्पका: स्युर्ग्रहणस्य सम्भव: (सिद्धान्ततत्त्वविवेक:)

21 विश्वाल्पांशे सम्भव: स्याद् ग्रहस्य (केतकीग्रहगणितम्, 5.1)

** Associate Professor, School of Linguistics and Literary Studies*
*Chinmaya Vishwavidyapeeth*
*Veliyanad, Ernakulam*

ISSN 2456-3420

# देवप्रासादनिर्माणाय भूमिचयनविमर्शः

डॉ. देशबन्धुः, भूपेश आनन्दः

वास्तुशास्त्रे देवालयनिर्माणादीनां विस्तृतवर्णनं समुपलभ्यते। देवालयनिर्माणाय सर्वाधिकम् आवश्यकं तत्त्वं प्रासादस्य भूमिचयनमेवास्ति। अतः भूमिचयनस्य विषये वास्तुशास्त्रे अनेकविधसिद्धान्तानां वर्णनं समुपलभ्यते। वास्तुशास्त्रानुसारं भूमेः परीक्षणं भूमेः प्लवन – आकार – मृतिका – वर्णभेदैः क्रियते।

प्रासादनिर्माणाय सर्वप्रथमं रमणीयस्थानस्य चयनं कार्यम्। प्रासादमण्डनानुसारेण सा भूमिः श्रेष्ठभूमिर्भवति या भूमि मध्यस्थानाद् उन्नता चतसृषु दिक्षु अवनता भवति। क्रमशः पूर्वोत्तरीशानदिक्षु अवनता अथवा पूर्वोत्तरीशानदिक्षु च यस्यां भूमौ प्लवनं यत्र भवति सा भूमिः प्रासादनिर्माणाय उत्तमा भवति।

**सर्वदिक्षु प्रवाहं वा प्रागुदकशङ्करप्लवाम्।**
**भुवं परीक्ष्य सिञ्चेत् पञ्चगव्येन कोविदः।।**[1]

एवमेव भूमेः प्लवनमाध्यमेनापि शुभाशुभत्वं विचार्यते यदि भूमौ जलस्य प्लवनं सर्वदिक्षु पूर्वोत्तरेशानयाः वा स्यात्तदा सा भूमिः प्रासादनिर्माणाय शुभंकरी भवतीति।

प्रासादनिर्माणात् पूर्वं भूमेः परीक्षणम् (भूपरीक्षणं) आवश्यकं भवति। बृहद्वास्तुमालानुसारेण भूमेः वर्णचतुष्टयं भवति। तत्र श्वेतवर्णा भूमिः ब्राह्मणी, रक्तवर्णा भूमिः क्षत्रिया, हरितवर्णा भूमिः वैश्या, कृष्णवर्णा च शूद्रा इत्यभिधीयते।[2]

ब्राह्मणी भूमिः कुशयुक्ता सुगन्धा च भवति। क्षत्रिया भूमिः शरयुक्ता (मूञ्ज) रक्तगन्धा च भवति। वैश्याभूमिः कुशकाशाकुला मधुगन्धा च भवति तथैव शूद्रा भूमिः तृणादियुक्ता मद्यगन्धा च भवति। अर्थाद् ब्राह्मणी मधुरसा, क्षत्रिया कषायरसा, वैश्याम्लरसा, शूद्रा तिक्तरसा च भवति।

**अम्ला भूमिर्भवेद्वैश्या तिक्ता शूद्रा प्रकीर्तिता।**
**मधुरा ब्राह्मणी भूमिः कषाया क्षत्रिया मता।।**[3]

बृहद्वास्तुमालायां भूमेः फलमपि समुपलभ्यते। तत्र ब्राह्मणी भूमिः सुखदा, क्षत्रिया भूमिः राज्यप्रदा, वैश्या भूमिः धनधान्यदा, शूद्रा भूमिः त्याज्या च भवति।

दानवराजमयानुसारेण देवानां तथा ब्राह्मणानाञ्च कृते चतुरस्त्रायता भूमिः श्रेष्ठा भवति।

**देवानां तु द्विजातीनां चतुरस्त्रयता: श्रुताः।**[4]

आधुनिककालेऽपि भारतवर्षेऽनेकैदेवप्रासादाः आयताकाररूपेण प्राप्यन्ते।

यस्यां भूमौ बीजरोपणात् त्रिपञ्चसप्तरात्रिषु बीजांकुरो भवति सा भूमिः श्रेष्ठा भूमीति कथ्यते। इदमपि विलोक्यते यद् भूमिः सगर्ता, ऊर्ध्वाऽधोमुखी, तिर्यग् वा न भवेत्। यस्यां भूमौ गर्ताः न भवेयुः सा भूमिरपि श्रेष्ठा भूमिः भवति। या भूमिर्ग्रीष्मकाले शीतला शरद्युष्णा च भवति, यस्याः ध्वनिः मृदङ्गवल्लकी–वेणुदुन्दुभीनां समा भवति सा भूमिरेव देवालयनिर्माणाय शुभंकरी भवति।

प्लवनवशाद् भूमेः संज्ञा 'वीथी' भवति या भूमिः ईशानकोणे उन्नता नैर्ऋत्यकोणे च निम्ना भवति सा भूतवीथी नाम्ना ज्ञायते। या भूमिः उत्तरे उन्नता दक्षिणे चावनता भवति सा यमवीथी नाम्ना ज्ञायते। या भूमिः दक्षिणे उन्नता उत्तरे चावनता भवति सा गजवीथी कथ्यते। या भूमिः आग्नेयदिशि उन्नता वायव्ये दिशि चावनता सा नागवीथी ज्ञायते। या भूमिः वायव्योन्नता आग्नेयावनता च सा भूमिः वैश्वानरी ज्ञायते। या भूमिः नैर्ऋत्योन्नता ईशानावनता च सा भूमिः धनवीथी कथ्यते।[5]

अग्निपश्चिमयोर्मध्ये उन्नता भूमिः तथा वायव्योत्तरयोर्मध्ये अवनता भूमिः सुपथनाम्ना ज्ञायते। सुपथाः भूमिः सर्वकर्मयोग्या भवति।

**याम्याग्न्यन्तरमुच्चं स्यान्नीचं मारुतसोमयोः।**
**सुपथं नाम तद्वास्तु प्रशस्तं सर्वकर्मणि।।**[6]

**भूमिपरीक्षणम्**

मनोनुकूलभूमेः चयनानन्तरं भूमेः परीक्षा कार्या। भूपरीक्षाद्वारा वयं ज्ञातुं प्रभवामो यद् भूमिः भवननिर्माणार्हाऽनर्हा वेति। पञ्चसु महाभूतेषु पृथ्वीतत्त्वमतीव महत्त्वपूर्णमस्ति, एवञ्च सैव भवनस्य आधारभूतापि भवति। भवननिर्माणस्याऽऽधार एव भवनस्य दीर्घायुष्यं सुनिश्चिनोति। अत एव पुराणेष्वन्यग्रन्थेष्वपि भूमिपरीक्षायै कानिचित्प्रमाणानि सम्प्राप्यन्ते। वैष्णवपुराणेषु भूपरीक्षायै प्रमुखाः चतुर्विधाः विधयो निर्दिष्टाः। ते च।

1– मृत्तिकया भूपरीक्षणम्,
2– जलेन भूपरीक्षणम्,
3– घृतवर्त्तिद्वारा भूपरीक्षणम्,
4– बीजवपनेन भूपरीक्षणञ्चेति।

**1. मृत्तिकया भूपरीक्षणम् –**

नारदपुराणानुसारेण यस्मिन् स्थाने गृहनिर्माणं कर्त्तव्यं तत्र अरत्निमात्रम् (कर्पूरतः कनिष्ठकां यावत्) आयताकारं गर्तञ्च खनित्वा कुण्डनिर्माणं कार्यम्। तदनन्तरं तत्खातं तन्मृदैव पूरयेत्। यदि खातपूर्त्यनन्तरमपि मृदाऽवशिष्यते, तर्हि सा भूमिः समाप्रदा ज्ञेया। यदि मृत्तिकया खातपूर्त्तिर्न भवेच्चेत् सम्पद्धानिदा सा भूमिर्ज्ञेया।यदि मृदा समा तर्हि फलमपि समं (नैव सम्पत्तिवृद्धिकरा न च हानिप्रदा) ज्ञेयम्। तद्यथा–

नारदपुराणे –

**समगर्तारत्निमात्रं मात्रं खनित्वा क्ता पूरयेत्।**

**अत्यंतवृद्धिरधिके हीने हानिः समे समम्।** [7]

मत्स्यपुराण[8]– अग्निपुराण[9]– वास्तुमण्डन[10]– राजबल्लभवास्तु–शास्त्र[11]– समराङ्गणसूत्रधार[12]– बृहत्संहिता[13]– मयमतमादिषु[14] ग्रन्थेषु भूपरीक्षणस्य विविधाः विधयः वर्णिताः।

**जलेन भूपरीक्षणम्**

नारदपुराणानुसारेण पूर्ववद् अरत्निमात्रं कुण्डं निर्माय सायंकाले तज्जलेन प्रपूर्य प्रातःकाले तद्दर्शनं कुर्यात्। यदि कुण्डे जलमवशिष्टं **'स्यात् तर्हि तत्र निवासेन वृद्धिर्भवति। पङ्केऽवशि'** मध्यमं फलं ज्ञातव्यम्। यदि कुण्डभूमौ क्षयः (स्फोटः) (त्रुअः) जातः तर्हि तत्र निवासेन क्षयो (हानिः) जायते। तद्यथा–

**तदा निशादौ तत्कृत्वा पानीयेन प्रपूरयेत्।**

**प्रातर्दृष्टे जले वृद्धिः समं पङ्क्ते क्षयः क्षये।।**[15]

अग्निपुराणे जलद्वारा भूपरीक्षणस्य स्मरणमात्रं कृतम्।[16] वास्तुसौख्यनामके ग्रन्थेऽपि जलद्वारा भूपरीक्षणस्य प्रतिपादनं कृतम्।

**तत्रारत्निमितं गर्तं खनित्वाऽन्तः प्रपूरयेत्।**

**प्रातर्दृष्टे जले वृद्धिः समं पङ्के व्रणे क्षयः।।**[17]

अन्यवास्तुशास्त्रग्रन्थेष्वपि 'जलद्वारा भूपरीक्षणम्' इत्यस्य विधेः वर्णनं प्राप्यते। यत्र अरत्निमात्रं कुण्डं निर्माय जलेन प्रपूर्य प्रातःकाले परीक्षणस्य स्थाने तदैव कुण्डात् शतपदं गच्छेत् पुनरागत्य यदि कुण्डे जलं पूर्ववदेव भवेत्तर्हि तत्र वासस्य शुभं फलं जानीयात्, यदि किञ्चित् न्यूनं स्यात्, तर्हि मध्यमं फलं ज्ञेयं यदि अत्यधिकं न्यूनं स्यात् तर्हि अधमं फलमनुमेयम्।

राजवल्लभवास्तुशास्त्र[18]–बृहत्संहिता[19]–समराङ्गणसूत्रधार[20]–मयमतमादिषु[21] ग्रन्थेष्वपि जलेन भूपरीक्षणस्य विविधाः विधयः तेषां फलानि च प्राप्यन्ते।

**2. घृतवर्तिद्वारा भूमिपरीक्षणम् –**

मत्स्यपुराणानुसारेण भूपरीक्षणार्थं हस्तैकपरिमितं खनित्वा सर्वतः सम्यगुपलिप्य स्वच्छीकुर्यात्। ततः परं हि अपक्वदीपं घृतेन प्रपूर्य तस्मिन् वर्तिचतुष्टयं प्रज्वालयेत्, प्रज्वाल्य तं दीपं तत्रैव गर्ते स्थापयेत्। तासां वर्त्तिकानां दीप्तिमुखानि चतसृषु दिक्षु स्युः। यदि पूर्वमुखा वर्त्तिका अधिककालं यावतज्ज्वलेत् तर्हि विप्राणां कृते तस्य फलं शुभप्रदं भवति। एवं हि उत्तरपश्चिमदक्षिणमुखानां वर्त्तिकानाम् अधिककालदीप्तिः क्रमशः क्षत्रियवैश्यशूद्राणां कृते शुभफलदा कल्याणकारिणी च भवति। यदि सः वास्तुदीपः चतुर्दिक्षु सततं ज्वलेत् तर्हि प्रासादनिर्माणाय गृहनिर्माणाय च सा भूमिः सर्वेभ्यो वर्णेभ्यः शुभफलप्रदा भवति। तद्यथा–

**अरत्निमात्रे वै गर्ते स्वनुलिप्ते च सर्वशः।।**

**घृतमामशरावस्थं कृत्वा वर्तिचतुष्टयम्।**

**ज्वालयेद् भूपरीक्षार्थं तत्पूर्णं सर्वदिङ्मुखम्।।**

**दीप्तौ पूर्वादि गृर्हियाद् वर्णानामनुपूर्वशः।**

**वास्तुः सामूहिको नाम दीप्यते सर्वतस्तु यः।।**

**शुभदः सर्ववर्णानां प्रासादेषु गृहेषु च।** [22]

बृहत्संहितायां[23]– समराङ्गणसूत्रधारे चापि[24]– घृतवर्तिद्वारा भूपरीक्षणस्य विधिः वर्णितः।

**बीजवपनेन भूमिपरीक्षणम् –**

मत्स्यपुराणानुसारेण गृहनिर्माणस्य हेतुः चयनितभूमिं फालद्वारा कर्षयित्वा तत्र सर्वाणि बीजानि वपनीयानि (वपयेत्)। यदि तानि बीजानि त्रिरात्रिषु, पञ्चरात्रिषु सप्तरात्रिषु वा अङ्कुरितानि भवेयुः तर्हि तासां फलमेवमवगन्तव्यम्। यत्र त्रिरात्रिषु बीजानि अङ्कुरितानि भवन्ति, सा भूमिः उत्तमा, यत्र पञ्चरात्रिषु बीजानि अङ्कुरितानि भवन्ति, सा भूमिः मध्यमा, यत्र सप्तरात्रिषु बीजानि अङ्कुरितानि भवन्ति, सा भूमिः अधमा भवति। सप्तरात्रिषु अङ्कुरितबीजवती भूमिः अधमा ज्ञायते, सर्वथा त्याज्या च भवति। तद्यथा–

**फालकृष्टेऽथवा देशे सर्वबीजानि वापयेत्।।**

**त्रिपञ्चसप्तरात्रे च यत्ररोहन्ति तान्यपि।**

**ज्योष्ठोत्तमा कनिष्ठा भूर्वर्जनीयतरा सदा।।**[25]

बृहत्संहितायां[26]– विश्वकर्मवास्तुशास्त्रे[27] च बीजवपनेन भूपरीक्षणस्य अयमेव विधिर्वर्णितः।

**भूपरीक्षणे शल्यशोधनम्**

शास्त्रेषु पुराणेषु च गृहनिर्माणात् प्राग् भूपरीक्षणस्य वर्णनं प्राप्यते। भूपरीक्षणे 'शल्यशोधनम्' एकं प्रमुखं बिन्दु अस्ति। भूमौ नैका वाञ्छनीया अवाञ्छनीयाश्च पदार्थाः जायन्ते। अवाञ्छनीयाः पदार्था यथा– पशुपक्षिमनुष्याणामवशेषाः (अस्थिपञ्जरादीनि)। येन तस्यां भूमौ नकारात्मकविचाराणां सञ्चारो भवति। याभिः गृहपतिः अन्ये च परिवाराः प्रद्यूयन्ते। अतः अस्माभिः शल्यशोधनविधीनां विधिवत् पालनं कृत्वा शल्यनिष्कासनं कर्त्तव्यम्। अग्निपुराणेऽपि भूशोधनस्य विस्तृतविवेचनं प्राप्यते। तदनुसारम्–

अग्निपुराणे भूशोधनस्य निम्नविधीनाम् उल्लेखः प्राप्यते। या भूमिः अस्थिभिः अङ्गारादिभिश्च दुष्टा स्यात्, तां भूमिं खननद्वारा, गोप्रवासद्वारा, वारं वारं कर्षणैश्च शोधयेत्। नगरनिर्माणाय, ग्रामनिर्माणाय, दुर्गनिर्माणाय, गृहनिर्माणाय, प्रासादनिर्माणाय च कथितविधिना भूमेः शोधनमवश्यमेव कर्त्तव्यम्। मण्डपे ग्रामपूजातः मन्त्रतर्पणपर्यन्तं सम्पूर्णं कर्म निष्पाद्य सहस्त्रयागं यजेत्। भूमिं समतलीकृत्य तां गोमयेन चोपलिप्य चतसृणां दिशां साधनं कर्त्तव्यम्। स्वर्णदध्यक्षतैः प्रदक्षिणाक्रमेण रेखाः प्रकुर्वीत। मध्यतः ईशानकोणे स्थापिते जलपूर्णे कलशे शिवस्य पूजनं कर्त्तव्यम्। ततः वास्तुपूजनं कृत्वा कलशजलैः कुदालादिकं सिञ्चेत्। कलशे पूजां

कृत्वा लग्ने सम्प्राप्तेऽग्निकोणे पूर्वाभिषिक्तेन कुदालेन भूमिं खनेत्। ततो मृदमुद्धृत्य नैर्ऋत्यकोणे क्षिपेत्। तत्र खाते च कलशस्य जलं क्षिपेत्। ततः परं भूमिम् अभिषिच्य कुदालादिकं संस्नाप्य तत्पूजनं विधेयम्। तत्पश्चाद् वस्त्रैराच्छाद्य द्विजन्मनः स्कन्धे कुम्भं निधाय गीतवाद्यादिभिः वेदध्वनिभिश्च नगरस्य पूर्वसीमान्तं यावद्दूरमभीष्टं नयेत् तत्र क्षणं स्थित्वा नगरं परितो भ्रामयेत्। तथैव सीमान्तचिह्नानि ईशानगोचरं यावत् सिञ्चन् अर्घ्यदानमिति प्रोच्यते। अनन्तरं शल्यदोषवारणाय भूमिं जलान्तं प्रस्तरान्तं वा खनित्वा शल्यमुद्धरेत् तद्यथा–

**अस्थ्यङ्गारादिभिर्दुष्टामत्यन्तं शोधयेद् गुरुः।।**
**नगरग्रामदुगार्थं गृहप्रासादकारणम्।**
**श्वननैर्गोकुलावासैः कषणैर्वा मुहुर्मुहुः।।**
**मण्डपे द्वारपूजादिमन्त्रतृप्त्यवसानकम्।**
**कर्म निर्वर्त्याघोरास्त्रं सहस्त्रं विधिना यजेत्।।**
**समीकृत्योपलिप्तायां भूमौ संशोधयेद्दिशः।**
**स्वर्णदध्यक्षतै रेखाः प्रकुर्वीत प्रदक्षिणम्।।**
**मध्यादीशानकोष्ठस्थे पूर्णकुम्भे शिवं यजेत्।**
**वास्तुमर्भ्यर्च्य तत्तोयैः सिञ्चेत्कुद्दालकादिकम्।।**
**बाह्ये रक्षोगणानिष्ट्वा विधिना कुदालाद्यं प्रपूजयेत्।।**
**अन्यं वस्त्रयुगच्छत्रं कुम्भं स्कन्धे द्विजन्मनः।**
**निधाय गीतवाद्यादिब्रह्मघोषसमाकुलम्।।**
**पूजां कुम्भे समाहृत्य प्राप्ते लग्नेऽग्निकोष्ठके।**
**कुद्दालेनाभिषिक्तेन मध्यवक्तेन तु खानयेत्।।**
**नैर्ऋत्यां क्षेपयेन्मृत्स्नां खाते कुम्भजलं क्षिपेत्।**
**पुरस्य पूर्वसीमान्तं नयेद्यावदभीप्सितम्।।**
**अथतद्रक्षणं स्थित्वा भ्रामयेत्परितः पुरम्।**
**सिञ्चन्सीमान्तचिह्नानि यावदीशानगोचरम्।।**
**अर्घ्यदानमिदं प्रोक्तं तत्र कुम्भपरिभ्रमात्।**
**इत्थं परिग्रहं भूमेः कुर्वीततदनन्तरम्।।** [28]

अग्निपुराणे एकेनान्येन विधिनाऽपि शल्यज्ञानं भवति। अयं विधिः प्रश्नद्वारा शल्यज्ञानविधिरिति ज्ञायते। गृहकर्त्ताऽन्यश्च कश्चन लग्नकाले यदि प्रश्नं करोति, तन्मुखात् 'अ क च ट त प स ह' इत्येतेषां वर्णानां निर्गमः स्यात् तर्हि एतेषां दिग्भिः शल्यस्थितिः सूच्यते। अथ वा द्विजादिगृहकर्तुः पतनेन तदङ्गविकारेण तत्र तत्प्रमाणतः शल्यं जानीयात्। पश्वादीनां प्रवेशेन, कीर्तनेन खगानां विरुद्धतैश्च शल्यस्य दिशं जानीयात्। भूमौ फलके वाऽकाराद्य 'वर्गाढङ्क्षां मातृकां लिखेत्। वर्गानुसारेण क्रमशः ईशानपर्यन्तं सर्वासु दिक्षु शल्यज्ञानं प्राप्तव्यम्। 'अ' वर्गे पूर्वस्यां दिशि शल्यस्याऽनुमानं कर्त्तव्यम् अथ च लौहं ज्ञेयम्। 'क' वर्गेऽग्निकोष्ठके अङ्गारं जानीयात्। 'च' वर्गे दक्षिणस्यां दिशि भस्म ज्ञेयम्। 'त' वर्गे नैर्ऋत्यकोणे अस्थि ज्ञेयम्। 'त'वर्गे पश्चिमायां दिशि इष्टका ज्ञेया। 'प' वर्गे वायव्यकोणे कपालं जानीयात्। 'य' वर्गे उत्तरस्यां दिशि शवकीटादीन् जानीयात्। 'स' वर्गे ईशानकोणे लौहं विजानीयात्। 'द' वर्गे रजतस्यानुमानं कर्त्तव्यम्। 'क्ष' वर्गयुक्ते दिग्भागे तस्यामेव दिशि अन्येषामनर्थकारिणां वस्तूनामनुमानं कर्त्तव्यम्। तद्यथा–

**कर्करान्तं जलान्तं वा शल्यदोषजिघांसया।**
**खादयेद्भूकुमारीं चेद्विधिना शल्यमुद्धरेत्।।**
**अकचतपयशयशाहान्मानवाश्चेत्प्रश्नाक्षराणि तु।**
**अग्नेर्ध्वजादिपतिताः स्वस्थाने शल्यमाक्ष्यान्ति।।**
**कतुर्श्राघ्विकारेण जानीयात्तत्प्रमाणतः।**
**पश्वादीनां प्रवेशेन कीर्तनैर्विकतैर्दिशः।।**
**मातृकामणृवर्गाढङ्क्षां फलके भुवि वा लिखेत्।**
**शल्यज्ञानं वर्गवशात्पूर्वादीशान्ततः क्रमात्।।**
**अवर्गे चैव लोहं तु कवर्गेऽङ्गारमग्नितः।**
**चवर्गे भस्म दक्षे स्वादूवर्गेऽस्थि च नैर्ऋते।।**
**तवर्गे चेऽका चाऽऽप्ये कपालं च पवर्गके।**
**यवर्गे शवकीटादि शवर्गे लोहमादिशेत्।।**
**हवर्गे रजतं तद्वदवर्गाच्चानर्थकरानपि।**
**प्रोक्ष्याश्मभिः करापूरैरष्टाङ्गुलमृदन्तरैः।।** [29]

शल्यज्ञानार्थं प्रश्नचक्रमिदं चित्रमाध्यमेन प्रस्तूयते।




वास्तुग्रन्थेषु च शल्योद्धारस्य विविधा विधयो वर्णिताः। यथा प्रासादनिर्माणाय ईप्सितायां भुवि गोप्रवासः, भूमेः खननेन, प्रश्नचक्रद्वारा शल्यज्ञानं, पशुपक्षीणां शब्दद्वारा शकुनं ज्ञात्वा शल्यं जानीयात्। परञ्चाऽऽधुनिके समये एतेषां सर्वेषां परीक्षणानां सम्पादनं कठिनं विद्यते। किञ्च प्रश्नचक्रद्वारा शल्यज्ञानपरीक्षा सरला सुगमा चाऽस्ति। परञ्च अस्माभिः यस्यां भूमौ देवालयनिर्माणं करणीयं तत्र अनिवार्यत्वेन भूमिपरीक्षणं करणीयमेव। पूर्वोक्तविधिषु यं कमपि विधिमाश्रित्य अथवा

सर्वेषां विधीनामनुपालनं कृत्वा भूपरीक्षणमिदं कर्तुं शक्नुमः। यतोहि देवालयो देवस्य गृहं भवति अतः तद्देवगृहं कथमपि सदोषभूमौ न भवेत्।

## सन्दर्भाः

1 प्रासादमण्डनम् -अ.1- श्लो.सं.12
2 बृहद्वास्तुमाला- श्लो. सं. 27-28
3 बृहद्वास्तुमाला- श्लो. सं. 31
4 मयमतम् - अ. -3, श्लो..सं. 1
5 बृहद्वास्तुमाला श्लो.स.-44 - 47
6 तत्रैव- श्लो.स. 48
7 नारदपुराण. अ. 56, श्लो.सं. 543
8 मत्स्यपुराण.अ. 253, श्लो.सं. - 16, 17
9 अग्निपुराण. अ. 42, श्लो. सं. 8-9
10 वास्तुमण्डनम्. अ. -1, श्लो.सं. 68-69
11 राजवल्लभवास्तुशास्त्रम्. अ.1 श्लो. सं. 16
12 समराङ्गणसूत्रधार. अ. 8 श्लो. सं. - 67, 68, 69
13 मयमतम्. अ- 4 श्लो. सं. 10, 11, 17, 18
14 बृहत्संहिता. अ-53, श्लो. सं. 42
15 नारदपुराण. अ. 56, श्लो. सं. - 544
16 अग्निपुराण.अ. 92, श्लो. सं. 9
17 वास्तुसौख्यम्. श्लो. सं. - 17
18 राजवल्लभवास्तुशास्त्र. श्लो.सं. - 16
19 बृहत्संहिता. अ. - 53, श्लो. सं. 93
20 समराङ्गणसूत्रधार. अ.8, श्लो. सं. 71-72
21 मयमतम्. अ.- 4, श्लो.सं.-16, 17
22 मत्स्यपुराण. अ. 253 श्लो. सं. - 13-16
23 बृहत्संहिता. अ.- 53 श्लो. सं. 14
24 समराङ्गणसूत्रधार. अ. 1 श्लो. सं. 74
25 मत्स्यपुराण. अ.- 253, श्लो. सं. 17-18
26 बृहत्संहिता.अ-53, श्लो. सं. 98
27 विश्वकर्मवास्तुशास्त्रम्. अ. -5 श्लो. सं. 21, 22
28 अग्निपुराण. अ. - 92, श्लो. सं. 9-19
29 अग्निपुराण. अ. - 92, श्लो. सं. 20-26

## सन्दर्भग्रन्थसूची

1. प्रासादमण्डनम्, सूत्रधारमण्डन, भास्करशर्मा श्रोत्रियः, जगदीश संस्कृत पुस्तकालय जयपुर, 2004.
2. बृहत्संहिता, वराहमिहिर भट्टोत्पलीयविवृति, सम्पा.सुधाकरद्विवेदी पुनर्सम्पादन कृष्णचन्द्र द्विवेदी, सम्पूर्णानन्द संस्कृत विश्विवद्यालय बनारस 1996, हिन्दी अनुवाद अत्युतानन्द झा, चौखम्बा प्रकाशन, बनारस, 1997.
3. मयमतम्, दानवराजमयप्रणीतम्, डॉ. शैलजा पाण्डेयः, चौखम्बा सुरभारती प्रकाशन, वाराणसी, 1989.
4. बृहदवास्तुमाला, प. रामनिहोर द्विवेदी, सम्पादन ब्रह्मानन्द त्रिपाठी, चौखम्बा सुरभारती प्रकाशन, वाराणसी 1998.
5. नारदपुराण वेदव्यास, गीताप्रेस गोरखपुर, अष्टादश संस्करण, वि.सं. 2076.
6. मत्स्यपुराण रामप्रतापत्रिपाठी, साहित्य सम्मेलन, प्रयागः 1989.
7. अग्निपुराण, वेदव्यास प्रणीत, गीतप्रेस गोरखपुर, अष्टादश सं.,वि.सं. 2076.
8. वास्तुमण्डनम्, सूत्रधारमण्डन, श्रीकृष्ण 'जुगनू' चौ. सुरभारती प्रका., 2009.
9. राजवल्लभवास्तुशास्त्रम्, डॉ. रमेश द्विवेदी, डायमण्ड पाकेट बुक्स, दिल्ली, 2005.
10. समराङ्गणसूत्रधार, भोजदेवः, प्रो. पुष्पेन्द्रकुमास, न्यु भारती कार्पोरेशन, दिल्ली, 1998.
11. वास्तुसौख्यम्, श्री टोडरमल, सम्पूर्णानन्द संस्कृतविश्वविद्यालय, वाराणसी, 1999.

*सहायकाचार्यः, वास्तुशास्त्रविभागः **
*शोधच्छात्रः वास्तुशास्त्रविभागः ***
*श्रीलालबहादुरशास्त्रीराष्ट्रियटसंस्कृतविश्वविद्यालयः*
*( केन्द्रीयविश्वविद्यालयः ) नवदेहली-110016*

ISSN 2456-3420

# संहितादृशा उत्पातविमर्शः

डॉ. दीपकुमारः

**उपोद्घात्**- परमात्मन आकृष्टशक्तया चालिते अखण्डेऽस्मिन् ब्रह्माण्डे सर्वासु रचनासु सर्वोत्कृष्टा रचनाऽस्ति मनुष्यः। मानववपुरेवात्मोद्धरणाय परमं साधनं विद्यते। किन्तु भगवतः मायया बलादाकृष्टाचित्तमानवेष्वने-काहंकारवृत्तयो अनायासेन जायन्ते। कर्तृत्वाभिमानरोगरुग्णो मानवो यदा सर्वमपि कर्तुरहं समर्थोऽस्मीति भावयति तदाऽखण्डब्रह्माण्डनायको ईश्वरः विविधैः प्रकारैः तस्याहंकारोपशमनाय अज्ञानान्धकारनाशाय दिग्भ्रमनिवारणाय चापदः सृजति। एतासु प्राकृतिकापत्सु महामारी-अनावृष्टि-अतिवृष्टि-अग्निदाहः, झञ्झावात-भूकम्पादयः प्रमुखास्सन्ति। एतासां भूकम्पादीनामापदानां निमित्तरूपाः सूर्यादयो ग्रहारेव भवन्ति।

वस्तुतः ग्रहाधीनं जगत्सर्वमिति सार्वभौमज्योतिष-सिद्धान्तानुगुणं जगतस्सर्वेऽपि चराचरपदार्थाः ग्रहेभ्यः प्रतिक्षणं प्रभाविताः जायन्ते। उदिते सूर्ये कमलानि विकसन्ति, अस्तंगते सति च सूर्ये रजनीगन्धानामकं पुष्पं स्वसुगन्धिं सर्वत्र प्रसारयति। इत्थं वनस्पतिषु सूर्यस्य प्रभावाः प्रत्यक्षं दृश्यते। एवं पृथ्वीरियमपि ग्रहाणां कुप्रभावैः सुप्रभावैश्चन प्रभाविता भवति। प्राकृतिकोत्पतिषु भूकम्पस्य सर्वोपरि विद्यते यतः वर्तमानकालं यावदपि वैज्ञानिकेऽस्मिन्युगे न कोऽपि वैज्ञानिक निश्चेतुं शक्नोति भूकम्पागमनकालम्। अद्यतनवैज्ञानिकास्त्विदन्तु जानन्ति यदागमिष्यति भूकम्पःपरन्तु कदागमिष्यति कथञ्चागमिष्यतीति नैव वक्तुं प्रभवन्ति ते।

ज्योतिषशास्त्रस्य संहितास्कन्धे भूकम्पादीनामोत्पातानां कारणानि लक्षणानि च परिगृहितानि सन्ति। संहितादृशात्र शोधपत्रेस्मिन्ग्रहाणां दिव्योत्पातादिषु प्रभावविचारः करिष्यते।

**उत्पाताः**-

आचार्यवराहमिहिरविरचितायां बृहत्संहितायामा-पद्पदेनोत्पा-तग्रहणं कृतं विद्यते। तत्राचार्येणोत्पातव्युत्पत्तौ इत्थं प्रतिपादितं यत् प्रकृतेरन्यत्वमुत्पातः।[1] अर्थात् प्रकृतेः स्वभावादन्यत्वं नाम वैपरीत्यमेवोत्पात इति। अत्रोत्पात एवापद्पदेन गृह्यते यतः अन्येष्वपि ग्रन्थेषु आपदेति पदस्य प्रयोग उत्पातस्यार्थे प्राप्यते। सन्दर्भेस्मिन् भद्रबाहुसंहितायामप्युक्तमस्ति यत् प्रकृतेर्योन्यथाभावः वर्तते स एवोत्पातस्सर्वदा भवति।[2] अतोत्र य प्रकृतिविपर्यास एवोत्पातः।

संहितादिग्रन्थेषु उत्पाताः त्रिधा विभाजिताः सन्दृश्यन्ते। तद्यथा 1)दिव्योत्पातः 2)आन्तरिक्षोत्पातः 3)भौमोत्पातः।

**1) दिव्योत्पातः**- स्वर्भानु-केतु-नक्षत्र-ग्रह-तारार्क-चन्द्रजं चोत्पातं तत् दिव्यमित्युच्यते। अर्थात् सूर्य-चन्द्र-भौम-बुध-गुरु-झशुक्र-शनि-राहु-केतूनां नक्षत्राणां च यो विकारः सः दिव्यसंज्ञकमुत्पातः। बृहत्संहिताटीकाकारेणाचार्यभट्टोत्पलेनाप्य-स्मिन्विषये प्रोक्तं यद्दिवि भवा दिव्या इति। ग्रहाणामादित्यादिनामृक्षाणाम-श्विन्यादीनां च यद्वैकृतं तत् दिव्यमुत्पातमित्युच्यते। अत्र सूक्ष्मदृशा विचारयामश्चेत् प्राप्यते यत् रविचन्द्रौ प्रत्यक्षौ, अन्ये तेजो-भू-खम्बू-वातेभ्यः समुत्पन्नाः पञ्चताराग्रहाः सन्ति। अन्ये राहु-केतु-नक्षत्राणि च यजमान-भृत्योः सूचकाः सन्ति। भूपहननं, बहुवातः, ग्रहयुद्धं, कुवर्षणम्, दुर्भिक्षः, शस्त्राग्निभयम्, समुद्रापद, अनावृष्ट्यादीनि शुभाऽशुभानि फलानि दिव्योत्पाते सति सम्भवन्ति। बृहत्संहितायामष्टौ देवा उत्पातस्य फलसंसूचकत्वेन भाणितास्सन्ति यैऽष्टौ विषयाः प्रभावयन्ते। तद्यथा-

| देवाः | प्रभावितविषयाः |
|---|---|
| पृथ्वी | नगरम् |
| जलम् | जनपदः |
| अग्निः | कोषः |
| वायुः | वाहनम् |
| आकाशः | पुरोहितः |
| सूर्यः | पुत्रः |
| चन्द्रः | स्वामिः |
| यजमानः | भृत्यः |

सन्दर्भेऽस्मिन् गर्गवचनमित्थं प्राप्यते-

**स्वर्भानुकेतुनक्षत्रग्रहतारार्कजेन्द्रजम्।**
**दिवि चोत्पद्यते यच्च तद्दिव्यमितिकीर्तितम्।।**[3]
**पुरे जनपदे कोशे वाहनेऽथ पुरोहिते।**
**पुत्रेष्वात्मनि भृत्येषु पश्यते दैवमष्टधा।।**[4]

अद्भुतसागरादि ग्रन्थेषु सूर्यादिग्रहाणां दिव्योत्पात-कारकत्वे सति उत्पातलक्षाणि, प्रभावितक्षेत्राणि फलानि च इत्थं वर्णितानि सन्ति-

यदि सूर्य उत्पातकारकस्स्यात्तदा सूर्यग्रहणादनन्तरं सप्तदिनानि यावदाकाशे ग्रहयुद्धदर्शनं भवति। एतेन तस्मिन्क्षेत्रे अनावृष्टिः प्रजासु परस्परं युद्धं च जायते। अपि च सप्तभूपनाशः, दुर्भिक्षं, शस्त्रभयम् अग्निभयं वायुभयं चापि सञ्जायते।

चन्द्रे उत्पातकारके सति चन्द्रस्य दशविधसंस्थानेषु नौसंस्थानं दृश्यतेऽर्थादुन्नतमीषच्छृऽगं भवति चन्द्रः। एतेन समुद्रे आपद आगच्छति नाविकाः पीडिताः भवन्ति, भूकम्पभयं च सम्भवति। यदा भौमग्रहकारणादुत्पातो जायते तदा भौमः उदयनक्षात् दशमे एकादशे द्वादशे वा नक्षत्रे गत्वा वक्रगतिकः भवति। एवं जाते सति त्रयोलोकाः पीडिताः भवन्ति, रसाः दूषिताः जायन्ते। भूमौ अवर्षणं च भवति। बुधेनोत्पाते कृते सति प्रजासु जलभयम्, अग्निभयम्, वायुभयं च भवति। नर्तकाः हासज्ञः, नटाः, गायकाश्च हन्यन्ते।

बृहस्पतिर्यदोत्पातकारकत्वेन तिष्ठति तदा नैसर्गिकं वर्णं विहाय अग्निवर्णः अवलोकयते। एतेनाऽप्यग्निभयं पवनभयम् अनावृष्टिश्च सम्भवति। प्रजानाशः विविधप्रकारैः जायते। मघादिपञ्चनक्षत्रेषु गतः शुक्रः कृत्तिकां भिन्दन् शुक्रश्च यदा भवति तदाऽपि दिव्योत्पाताः जायन्ते। एतादृशः शुक्रः सामुद्रान् हन्ति। मेघा अजस्रं वहन्ति। झंझावाताः जायन्ते। कामुकाः नश्यन्ति च। शनिना यदा दिव्योत्पाता क्रियन्ते तदा भिन्न भिन्ननक्षत्रवशात् शनिः भिन्नः-भिन्नानि फलानि प्रयच्छति। जनेषु परस्परं विभेदः, क्लेशः युद्धं च जायते। लोके महामारकरोगाः प्रवर्द्धन्ते।

राहुर्यदा सज्वालः, पाटलपुष्पसमो वा दृष्टिपथमायाति तदा सोप्युत्पातकरो ज्ञेयः। एतादृशे राहौ वायुभयम्, अशनिपातः, क्षितिकम्पः, रोगवृद्धिश्च सम्भवति। धूमायनः एकचूल द्विचूलः त्रिचूलः वा यदा शिखिरर्थात् केतुः सन्दृश्यते तदा सोऽप्युत्पात-कारकोऽस्तीत्यवगन्तव्यम्। एवंविधेन् केतुना उपद्रववृद्धिः भूपनाशः सेनासु विभेदः, धर्महानिरनीतिवृद्धिः अग्निभयं च सञ्जायते। नक्षत्रवशादपि दिव्योत्पाताः समुद्भवन्ति। खे यदा तारकाः धूमज्वालाविस्फुलिङ्गान्विताःदृश्यन्ते तदा नक्षत्रकृतोत्पाता इहलोके ज्ञेयाः। एतेन सर्वलोकः ध्वंस्यते।

अनया रीत्या दिव्योत्पातानां विविधानि लक्षणानि तेषां शुभाऽशुभानि फलानि च ज्योतिषशास्त्रस्यानेकेषु ग्रन्थेषु लभयन्ते। तत्सम्बन्धीनि प्रमाणवचनान्यत्रोपस्थाप्यन्ते-

**दृश्यते भास्करस्यार्धं गृहीतमिव चापरम्।**
**कम्पते यदि वाप्येव तदा विद्याज्जनक्षयम्।।**[5]
**व्योममध्यगतं पश्येद्यदि सूर्यद्वयं नरः।**
**चौरव्याघ्रभयावृष्टिर्दुर्भिक्षं राष्ट्रविप्लवः।।**[6]
**भस्मनिभः परुषोऽरुणमूर्तिः शीतकरैः किरणैः परिहीणः।**
**श्यावतनुः स्फुटितः स्फुरणो वा क्षुड्डमरामयचौरभयाय।।**[7]
**उन्नतमीषच्छृङ्गं नौसंस्थाने विशालता चोक्ता।**
**नाविकपीडा तस्मिन्भवति शिवं सर्वलोकस्य।।**[8]
**दशमैकादशे चापि निवृत्ते द्वादशेऽपि वा।**
**लोहितांगे ग्रहे ज्ञेयं वक्त्रमश्रुमुखं च तत्।।**
**तत्र वर्षति पर्जन्ये दूषयन वै शुभान् रसान्।**
**दृष्टास्ते दूषयन्त्याशु नृणां धातूस्तथा दृशम्।।**[9]

**आन्तरिक्षोत्पाताः**- अन्तरिक्षसम्बन्धितोत्पातः आन्तरिक्षोत्पातः। अर्थादन्तरिक्षे भव आन्तरिक्षेतिव्युत्पत्यनुगुणं निर्घातोल्कापवन-परिवेषगन्धर्वनगरपुरन्दरचापादिभवोत्पातमान्तरिक्षोत्पातसञ्ज्ञयाऽभिधीयते।[10] तद्यथा-

**उल्कापातो दिशां दाहः परिवेषस्तथैव च।**
**गन्धर्वनगरं चैव वृष्टेश्च विकृतिस्तु या।।**
**एवमादीनि लोकेऽस्मिन्नान्तरिक्षं विनिर्दिशेत्।**

बृहत्संहिताविवृतिकारेणाचार्यभट्टोत्पलेनाप्युक्तमस्ति यत् ग्रहनक्षत्रस्थाने विहायाऽन्यत्राकाशे योत्पाताः दृश्यन्ते ते आन्तरिक्षा इति। आन्तरिक्षोत्पातस्येव नामान्तरं नाभसमित्यस्ति। अत्र नभसि भवः नाभसः। एतस्य फलपरिपाकविषये प्रोक्तं विद्यते-

**'नाभसं मध्यफलदं मध्यकालफलप्रदम्'**

आन्तरिक्षोत्पातलक्षणानि नामसहितानि सफलानि इत्थं कथितानि वर्तन्ते शास्त्रेषु-

**1. उल्का**- उल्काः पञ्चप्रकारकाः कथिताः। खमध्यात् बह्वय उल्काः भ्रमत्यः चन्द्रार्कौ संस्पृशत्यः यत्र तत्र देवप्रतिमासु च पतन्ति। लक्षणानन्तरं 15 दिनं यावत् परिपाककालः भवति। राष्ट्रनाशः क्षितिकमनश्चेतस्योल्कायाः फलं भवति। पताकृति-बहुपटविरचितः, मीन-पर्वत-हस्ती-पदम्-अश्व-हंस-शङ्ख-श्रीवृक्ष-स्वस्तिकरूपा उल्काः श्रेयः लब्धपालनम् (क्षेमं) सुभिक्षं च कुर्वन्ति।[11]

**ध्वजपद्मेभहंसाभा पर्वताश्वसमप्रभा।**
**श्रीवृक्षशंखसदृशी या चोल्का सा शिवप्रदा।।**

योल्का शशिसूर्यो संस्पृशति ताभ्यां निर्गता वा भूकम्पसहिता भवति सा परचक्रस्यागमनं कारयति राजभयं, दुर्भिक्षभयम् अनावृष्टिभयं चोत्पादयति।[12]

**संस्पृशति चन्द्रार्कौ तद्विसृता वा सभूप्रकम्पा च।**
**परचक्रागमनृपभयदुर्भिक्षावृष्टिभय जननी।।**

उल्कायाः वर्णभेदेन विप्रादिवर्णानां पृथक् पृथक्फलान्यापि कथितानि सन्ति। क्रमशः परिपाट्या द्विजाद्यान् वर्णाश्चतुरो घातयति। तद्यथा शुक्लवर्णोल्का ब्राह्मणान् हन्ति। रक्तवर्णा क्षत्रियान् हन्ति। पीतोल्का वैश्यान् नाशयति। कृष्णवर्णोल्का च शूद्रान् घातयति। योल्का शिरसा पतति सा विप्रान् हन्ति। वक्षस्था या पतति सा क्षत्रियान् नाशयति। पार्श्वाभ्यां योल्का तिष्ठति सा वैश्यान् घातयति। पुच्छेन च योल्का पतति शुद्रान् विनाशयति।[13]

**शुक्ला रक्ता पीता कृष्णा चोल्का द्विजादि वर्णहनी।**
**क्रमशश्चैतान् हन्युर्मूर्धोरः पार्श्वपुच्छस्था।।**

उल्कानां विभिन्नस्थलेषु पतनभेदेन फलभेदापि आचार्यवराह-मिहिरेण दर्शिताः। उल्का यदि सुरार्चासु पतन्ति चेद्राजभयं जनपदभयं च कुर्वन्ति। इन्द्रप्रतिमायां पतितोल्का निश्चयेन नृपपीडां कुर्वन्ति। वेश्मसु पतितोल्का गृहपतीनां पीडां कुर्वन्ति। दिक्पतयोग्रहाः उल्कया हताः भवन्ति तदा तद्दिग्वासिनां पीडा जायते। यस्यां दिशि चोल्कापातः भवेत्तद्दिग्वासिनां च नाशः सम्भवति। खलमुलूखादयः यदि उल्कया हता भवन्ति तदा कृषिजीविनां हानिर्जायते। प्रधानवृक्षे उल्कापातात् पूजितानां जनानां नाशः सम्भवति। उल्कापाते सति जनानां नाशः भवति। पितामहदेवालये उल्का यदि पतति तदा ब्राह्मणान् घातयति। गोष्ठे उल्कापातात् गोमिनः (गोस्वामिनः.गोपालकाश्च) नश्यन्ति।[14] तद्यथा-

**कुर्वन्त्येताः पतिता देवप्रतिमासु राजराष्ट्रभयम्।**
**शुक्रोपरि नृपतीनां गृहेषु तत्स्वामिनां पीडाम्।।**
**आशाग्रहोपघाते तद्देश्यानां खले कृषिरतानाम्।**
**चैत्यतरौ सम्पतिता सत्कृतपीडां करोत्युल्का।।**

**द्वारी पुरस्य पुरक्षयमथेन्द्रकीले जनक्षयोऽभिहितः।**

**ब्रह्मायतने विप्रान् विनिहन्याद् गोमिनो गोष्ठे।।**

**2. धिषण्य**– एषाऽऽगारकं निहन्त्य निपतन्ति। दर्शनान्तरं 15 दिनेष्वग्निभयमितिफलमत्र जायते। एषा दुर्बला अल्पपुच्छा द्वौ हस्तौ प्रमाणेन दीर्घा च भवति।

**3. अशनि**– आकाशात् निपतन्त्यतिरक्तवर्णा एषोल्का गोष्ठेषु पशुस्थलेषु सन्दृश्यते। एतस्याः फलपरिपाककालः 45 दिनानि। शस्यनाशः, दुर्भिक्षं कृषकाणां पीडा चात्र सञ्जायते।[16]

**4. विद्युत्**– महाध्वनिर्युक्ता सनिर्घाता एषा पतन्ती दृष्टिगोचरा भवति। 6 दिनं यावत् राष्ट्रनाशः जायते। एषा तट्तटेति शब्दं क्रियमाणा भवति। अपि चैषा सज्वाला झटित्येव निपतति।[17]

**5. तारा**– दिवा मध्याहनकाले अर्धरात्रे वा एषा निपतति। दर्शनात् परं 6 दिनेषु राजनाशः दुर्भिक्षश्च सम्भवति।[18] तद्यथा आचार्यवराहमिहिरः बृहत्संहितायाम्–

**दिविभुक्तशुभफलानां पततां रूपाणि यानि तान्युल्काः।**

**धिष्ण्योल्काशनिविद्युत्तारा इति पञ्चधा भिन्नाः।।**

**उल्का पक्षेण फलं तद्वद्धिष्ण्याशनिस्त्रिभिः पक्षैः।**

**विद्युदहोभिः षड्भिः तद्वत्तारा विपाचयति।।**

**दिग्दाहः**– दिशां दाहः दिग्दाहेतिव्युत्पत्यनुगुणं सूर्यास्तकाले यदा क्षितिजे दिक्षु च वह्निज्वालावत् दृश्यते स दिग्दाह उच्यते। दिग्दाहवशादनेकानि उत्पातकारकलक्षणानि वर्णितानि सन्दृश्यन्ते येषां सम्बन्धः प्रकृत्या सह वर्तते। तद्यथा पराशरः–

**प्राच्यादिष्वष्टासु दिक्षु दह्यमानासु अष्टमासान्तराद-नावृष्टिभयं त्रिमासाद्रोगमहोत्पातं च।**

दिग्दाहस्य फलपरिपाककालः षण्मासा अष्टौ मासाः वा वर्तते। आचार्य वराहेण वर्णभेदेन दिग्दाहफलमित्थं कथितमस्ति–

**दाहो दिशां राजभयायपीतो देशस्य नाशाय हुताशवर्णः।**

**यश्चारुणः स्यादपसव्यवायुः सस्यस्य नाशं स करोति दृष्टः।।**

छायावशादपि तमो-धूम-रजो-निहारिकादीनां फलान्यपि वर्णितानि सन्ति। यथा–

**यदा च सर्वभूतानां छाया न परिवर्तते।**

**अपराह्णगते सूर्ये लोकानां युगसंक्षये।।**(मत्स्यपुराणम्)

**दिग्दाहो यदा छायामपि व्यञ्जयति तदा राजभयं जायते।**

**योऽतीव दीप्त्या कुरुते प्रकाशं छायामपि व्यञ्जयतेऽर्कवद्यः।**

**राज्ञों महद्वेदयते भयं स शस्त्रप्रकोपं क्षतजानुरूपः।।**

**निर्घातः**– यदाकाशे वेगवान्वायुना वायुर्हत सहसा भूमौ पतति तदा सम्भूतः शब्दः निर्घातेति कथ्यते। निर्घातः वायुसम्भवः।[19]

**पवनः पवनाभिहतो गगनादवनौ यदा समापतति।**

**भवति तदा निर्घातः स च पापो दीप्तविहगरुतः।।**

निर्घातेषु दिक्कालतिथिनक्षत्रानुबन्धेन चतुर्विधं फलमुपा-दिशन्त्याचार्याः।[20] तद्यथा–

**यां दिशं चाभिगच्छेत्तु निर्घातो भैरवस्वनः।**

**तद्दिश्यान् हन्ति देशाश्च सर्वं दिक्प्रभवं च यत्।।**

**प्रतिसूर्यः**– उदयात्प्रभृति दिनप्रहरैकं यावत्तनुद्यनोऽर्कसमीपे यदा भवति तदार्करश्मिवशात्तत्र द्वितीयोऽर्क इव लक्ष्यते। स प्रतिसूर्य उच्यते। एवमेवास्तसमयेऽपि प्रतिसूर्यो सम्भवति। आदित्यस्योत्तरे यदा प्रतिसूर्यो दृश्यते तदा पर्जन्योऽर्थात् वृष्टिर्भवति। दक्षिणस्थोऽर्कस्य वातकरो भवति। उत्तरदक्षिणभाग्योर्द्वयोरपि स्थितः प्रतिसूर्यः सलिलभयं करोति। अर्कस्योपरि स्थितः प्रतिसूर्यो राजानं घातयति। सूर्यादधः स्थितः सूर्यः जनान् हन्ति।[21]

**दिवसकृतः प्रतिसूर्यो जलकृदुदग्दक्षिणे स्थितोऽनिलकृत्।**

**उभयस्थः सलिलभयं नृपमुपरि निहन्त्यधो जनहा।।**

**परिवेषः**– अर्कचन्द्रयोः रश्मयः वायुना वृत्ताकाराः कृताः यदाकाशस्थस्वल्पमेघे नानावर्णकृतयो दृश्यन्ते ताः आकृतयः परिवेषा उच्यन्ते। परिवेषाणामाकृतिवर्णग्रहद्रव्यादिभिरुत्पातस्य ज्ञानं सप्तरात्राच्च तत्फलं भवति।[22]

**उदयेऽस्तमयेमध्ये सूर्योचन्द्रमसोर्दिवि।**

**परिवेषः प्रदृश्येत् तद्राष्ट्रमवसीदति।।**

**सम्मूर्च्छिता रवीन्दोः किरणाः पवनेन मण्डलीभूताः।**

**नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषाः।।**

**इन्द्रधनुः**– कालविशेषे साभ्रे वियति सूर्यस्य रश्मयः पवनेन विघहिताः विविधवर्णाः धनुसदृशाः सन्दृश्यन्ते सेन्द्रधनुः। सुरेन्द्रचापवशादपि जगतश्शुभाऽशुभं विचारयितुं शक्यते।[23]

**सूर्यस्यविविधवर्णाः पवनेन विघट्टिताः कराः साभ्रे।**

**वियति धनुः संस्थानां ये दृश्यन्ते तदिन्द्रधनुः।।**

काश्यपमते अस्य फलमित्थं भणितमस्ति–[24]

**अनावृष्ट्यां भवेद्वर्षमैन्द्रयां वर्षत्यवर्षणम्।**

**पश्चिमायां भवेद्वर्षं सदा कार्मुकसंस्थितौ।।**

**वातः**– वायुनाऽपि समष्टिगतं शुभाऽशुभं फलं निश्चीयते। यदा सशर्करो रूक्षश्च वायुर्प्रचलति तदा सर्वविघ्नोत्पद्यते। पश्चिमदिकस्थः वायुर्यदा वाति तदा मेघनाशको भवति।

**भौमोत्पाताः**– भूमिसम्बन्धितः भौमः। भूमौ यत्किमपि स्थावरजङ्गमैरुत्पद्यते तत् भौमोत्पातसंज्ञकं भवति। चराणां वस्तूनां पदार्थानां वा स्थैर्यं स्थिराणां च चरत्वं तदुद्भवं यत् तद्भौममुत्पातमित्युच्यते। अत एव भूमौ भवाः भौमेति भौमशब्दस्य व्युत्पत्तिर्निष्पद्यते।[25] विष्णुधर्मोत्तरपुराणे सन्दर्भेऽस्मिन् इत्थं प्रतिपादितम्–

**चरस्थिरभवो भौमो भूकम्पश्चापि भूमिजः।**

**जलाशयानां वैकृत्यं भौमं तदपि कीर्तितम्।।**

भौमाद्भुतस्य भूगोलोत्पन्नत्वात् सकलभूगोलगामिफल-सूचकतत्त्वप्रसक्तौ विशेषोक्तः। भौमोत्पात एकदेशिकः भवति। अर्थादत्र शङ्क्येयमुत्पद्यते यत् भूमांवुत्पद्यत्वात् भौमोत्पातस्य प्रभावो सकलभूमण्डले भवितव्य। किन्त्वस्मिन्विषये स्पष्टीकृत-मस्त्याचार्यैः यत् यस्मिन् भूभगणे भौमोत्पात उत्पद्यते तत्रत्यानां प्राणीनां कृते एव प्रभावकारको फलदायको च भवति।[26] तद्यथा

**भूमावुत्पद्यते यच्च स्थावरे चाथ जङ्गमे।**
**तदैकदेशिकं भौमं भूमिचालाम्बुविक्रिया।।**

यस्मिन् यस्याधिकारस्तत्रोत्पन्नं तस्यैव शुभाशुभसूचक-मित्यस्य सिद्धान्तस्याऽत्र पुष्टिर्जायते। आचार्यभट्टोत्पलेनाऽपि बृहत्संहितायाः टीकायामुद्धाटितस्य गर्गवचनस्यापि अयमेवाशयः-

**भूमावुत्पद्यते यच्च स्थावरं वाथ जङ्गमम्।**
**तदेकदैशिकं भौममुत्पातं परिकीर्तितम्।।**

एतेषामुत्पातानां फलं राजा-प्रजा-पुरोहित-राज्ञी-राजपुत्र-कोष-वाहनादिषु प्रायः सञ्जायते। अर्थादेतै उत्पातैराधिक्येन प्रभाविताः भवन्ति। तद्यथा पराशरवचनम्-

नृपन्नृपतिसुतराज्ञीकोषलोकपुरपुरोहितवाहनेष्वेतेषां फलमतिनिर्वत्तते।

**एतदेवप्रमाणं मत्स्यपुराणदिष्वप्यवाप्यते।**[27]
**राज्ञः शरीरे लोके च पुरे दारपुरोहिते।**
**पाकमायाति पुत्रेषु तथा वै कोषवाहने।।**

एतदतिरिच्य देवमूर्तिषु अनिमित्तभङ्गचलनस्वेदाश्रूपात-जल्पनादयः विकाराः भौमोत्पातसूचकाः भवन्ति। पुष्प-पादप-सस्यवृक्षादिषु विकारार्थात् स्नेहस्राव-क्षीरस्राव-विकृतपर्णपुष्पफलादीनि ऋतुविपरीतपत्रपुष्प-फलानि, वडवोष्ट्र महिषीगेहस्तिनीषु यमलप्रसवादयोऽपि भौमोत्पातकारकाः वर्तन्ते। भूकम्पोऽप्यत्रैवायाति। दिव्योत्पातसमस्तजगतः आन्तरिक्षोत्पातः देवेभ्यः भौमोत्पातश्च राज्ञः भयप्रदो भवति। तद्वदेव दिनत्र्याधिकं यावद्यदि प्रचण्डो पवनः प्रवहति तदाऽपि अशुभफलप्राप्तिस्सम्भवति।[28] उक्तं च

**दिव्या जगतो देवस्य नाभसाः पार्थिवस्यभूप्रभवाः।**
**अनुबध्नन्तो भयदस्त्र्यहाधिकश्चानिश्चण्डः।।**

भौमोत्पातकसूचकलक्षणदर्शनान्तरं मासादारभ्य वर्षं यावत्तस्य फलपाकः भवितुं शक्यः। भौमोत्पातपश्चाद् सप्तरात्रपर्यन्तं यदि वृष्टिस्यात्तदारिष्टनाशः जायते। प्रजाजनानां सततधर्माचरणप्रभावादप्य-रिष्टहानिर्सम्भवति।[29] उक्तं च बार्हस्पत्ये-

**तत्र भौमान्यरिष्टानि व्यावर्तन्ते प्रजागुणैः।**
**सप्तरात्रात् पराहाद्वा पर्जन्यन्त्यप्यवर्षणात्।।**

भौमोत्पातकृतशुभाशुभफलावाप्तिरधिके कालेऽल्परूपेण च भवति। आन्तरिक्षोत्पातःमध्यकाले मध्यमफलप्रदः भवति। किन्तु दिव्योत्पातारचिरेण तीव्रफलदाः भवन्तीति विष्णुधर्मोत्तर-पुराणादिषूल्लिखिमस्ति।[30]

**भौमं चाल्पफलं ज्ञेयं चिरेण च विपच्यते।**
**नाभसं मध्यफलदं मध्यकालफलप्रदम्।।**
**दिव्यं तीव्रफलं ज्ञेयं शीघ्रकारि तथैव च।**

बृहत्संहिताकारमतानुसारं चिर-स्थिरवस्तूभ्य उत्पन्नो भौमोत्पातः शान्तिकर्मणा आहतो जायते। आन्तरिक्षोत्पातः शान्तिभिरल्पत्वमेति। दिव्योत्पातविषये केषाञ्चन मतमिदं विद्यते यत् एष उत्पातः शान्ति कारिते सत्यपि नष्टो न भवति।[31]

आचार्य काश्यपस्यापि इदमेव मतं विद्यते।

**भौमं चिरास्थिरभवं तच्छान्तिभिराहतं शममुपैति।**
**नाभसमुपैति मृदुतां क्षरति न दिव्यं वदन्त्येके।।**

तथा च काश्यपः[32]

**भौमं शान्तिहतं नाशमुपगच्छति मर्दितुम्।**
**नाभसं न शमं याति दिव्यमुत्पातदर्शनम्।।**

**उत्पातशान्त्युपायाः**- समेषामप्युत्पातानां शमनायाऽमृता अभया च शान्तिर्गदितास्ति। सौम्याख्या सर्वकामफलप्रदा महाशान्तिरस्ति। सन्निहितपुष्यनक्षत्रप्राप्तौ पुण्याभिषेको कर्तव्यः। भौमात्पाते सति विशेषेण अमृता शान्तिर्करणीया भवतीति विष्णुधर्मोत्तरे समुप्लभ्यते। तद्यथा

**सर्वोत्पातप्रशमनी अमृता चाऽभया स्मृता।**
**सौम्या चैव महाशान्तिः सर्वकामफलप्रदा।।**
**विशेषेण तु भौमेषु शान्तिः कार्याऽमृता भवेत्।**

मार्गलिककार्यैः व्रतहोमदानोपवासादिभिश्चान्तारिक्षोत्पाताः शमं यान्ति। दिव्योत्पाताः न नश्यन्तीतिमनीषिणां कथनं विद्यते तथापि अत्यन्नदक्षिणादानैर्बहुभिः होमैश्च दिव्यारिष्टान्यपि नश्यन्ति। गोसेवया देवब्राह्मणेभ्यः प्रभूतसुवर्णदानेनाऽपि दिव्योत्पाताः शान्तिमधिगच्छन्ति।[33] बृहस्पतिना, गर्गवराहाभ्यां चाऽत्र गोदोहनं शिवायतने कर्तव्येत्युक्तमस्ति। तस्याऽयमभिप्रायो विद्यते यत् शिवालयाय प्रभूतभूमिदानपुरस्सरं तत्र गोसेवां कृत्वा गोदोहनं कर्तव्यमिति। तद्यथा

**व्रतहोमोपवासैश्च दानैः स्वस्त्ययनैस्तथा।**
**आन्तरिक्षाण्यरिष्टानि व्यावर्तन्ते कथञ्चन।।**
**अव्यावर्त्तान्यरिष्टानि दिव्यान्याहुर्मनीषिणः।**
**ब्रह्मन्नदक्षिणादानैर्महाहोमान् प्रयोजयेत्।।**
**प्रशस्तानि च कुर्वीत देवब्राह्मणपूजनम्।**
**हिरण्यानां विसर्गाश्च कर्तव्या ब्राह्मणेष्वथ।**
**गोदोहश्च शमं याति दिव्योऽपीति मनीषिणः।।**

आचार्यवराहमिहिरेणापि उत्पातानां शान्त्यर्थमुपायाः कथिताः। सुरवैकृतं देवविकारं ज्ञात्वा शौचयुक्तः संयतः कृतस्नानश्च यजमानः दिनत्रयमुपवासं कुर्यात्। शास्त्रज्ञं पुरोहितमाहूय शान्तिं कारयेत्। पुरोहितोऽपि दिनत्रयं यावदुपवासं कुर्वन् पुष्पैः अनुलेपनैः, अम्बरैः उत्पन्नविकारमर्थात् देवप्रतिमां पूज्येत्। पुरोहितश्च मधुपर्केण

औदकैर्लोपिकापूपादिभिर्भक्ष्यैः उपहारैश्च विधिवत्पूजयेत् चरुणा तल्लिङ्गैर्रथार्तदीयैर्मन्त्रैविधानेनाग्नीं जुहुयात्।[34] एवं कृते सत्युत्पाताः शमं यान्ति।

**बुद्ध्वा देवविकारं शुचिः पुरोधास्त्र्यहोषितः स्नातः।**
**स्नानकुसुमानुलेपनवस्त्रैरभ्यर्चयेत् प्रतिमाम्।।**
**मधुपर्केण पुरोधा भक्ष्यैर्बलिभिश्च विधिवदुपतिष्ठेत्।**
**स्थालीपाकं जुहुयाद्विधिवन्मन्त्रैश्च तल्लिङ्गैः।।**

मत्स्यपुराणेऽपि भौमान्तरिक्षदिव्योत्पानां शान्तये त्रिविधा शान्तिः कथितास्ति। भौमोत्पातशान्तये अमृता शान्तिः, आन्तरिक्षोत्पातशमनाय अभया, दिव्योत्पातानां शान्त्यर्थं च सौम्याशान्तिरुदीरिता विद्यते।[35]

**अथातः सम्प्रवक्ष्यामि त्रिविधेष्वद्भुतादिषु।**
**विशेषेण तु भौमस्य शान्तिः कार्याऽमृता भवेत्।।**
**अभया चान्तरिक्षेषु सौम्याऽदित्येषु पार्थिव।**

वस्तुतः उत्पातानां फलं नृपदेहे प्रजायां, नगरे, राजभार्यासु, राजपुरोहिते माण्डलिकगृहस्थादिषु, राजपुत्रेषु कोष वाहनादिषु च भवति।[36]

**राज्ञः शरीरे लोके च पुरे दारपुरोहिते।**
**पाकमायाति पुत्रेषु तथा वै कोषवाहने।।**

आचार्य गर्गेण कथितमस्ति यत् उत्पातसम्भवफलं दैवं भवति। तच्च दैवमष्टप्रकारेण अष्टसु वा पच्यते। वस्तुतः पृथ्वी-जल-अग्नि-वायु-आकाश-सूर्य-चन्द्र-यजमानेत्यष्टदेवतानां समष्टिरूपं दैवमस्ति। शिवस्याष्टमूर्तय अत्र अभिप्रेताः। नगरे, जनपदे, कोषे, वाहने, पुरोहिते, पुत्रे, स्वामिनि सेवके चाष्टदेवताभिः संसूचितोत्पातानां फलमापतति।[37]

**पुरे जनपदे कोषे वाहने च पुरोहिते।**
**पुत्रे स्वामिनि भृत्ये च पच्यते दैवमष्टधा।।**

इत्थं वयं पश्यामः यत् उत्पाताः बहुविधाः भवन्ति येषां प्रभावः सर्वत्र पतति। उत्पातानवरोद्धुमस्मासु सामर्थ्यं नास्ति किन्तु उत्पातफलानि अत्यल्पानि कर्तुं तेषां शमोपायारस्माभिरवश्यं करणीयाः। तत्रापि वर्तमाने ये मन्त्रिणः, शासनाधिकारिणः जनप्रतिनिधयः उच्चाधिकारिणाः वा सन्ति। तैः प्रजाभिस्सह उत्पातशान्तये शास्त्रोक्तविधिना पूर्ण प्रयासो कर्तव्यः येन देशे सर्वत्र सुख-शान्ति समृद्धिश्च प्रसरेत्। यतः लोके तादृशोत्पातो नास्ति यस्य शमनं शास्त्रोक्तविधिना सम्भवं न भवेत्। उक्तं यथा आचार्यवाराहमिहिरेण-

**नास्ति लोके स उत्पातो यो ह्यनेन न शाम्यति।**
**मङ्गल्यं चापरं नास्ति यदस्मादतिरिच्यते।।**

## सन्दर्भाः


1. बृहत्संहिता उत्पाताध्यायः
2. भद्रबाहुसंहिता द्वितीयोध्यायः
3. बृ.सं अध्याय 36
4. टीकायां गर्गवचनम्
5. मयूरचित्रके
6. मयूरचित्रके
7. बृ.सं 4-29
8. बृ.सं 4-08
9. गर्गवचनम् (अ.सा.प्र.168)
10. अद्भुतसागरे(उपोद्घातः,पृ.10)
11. बृहत्संहितायां काश्यपवचनम्
12. बृ.सं. 33-12
13. बृ.सं33-14
14. बृ.सं. 33-20,21,22
15. बृहत्संहिता
16. बृहत्संहिता
17. बृहत्संहिता
18. बृहत्संहिता 33-01,02
19. बृ.सं. 38-01
20. अद्भुसागरः पृ. 505
21. बृ.स. 03-37
22. अद्भुतसागरः पृ.473-02, बृ.सं 34-01
23. बृ.सं 35-01
24. अद्भुतसागरः पृ.489-06
25. अद्भुतसागरः पृ.1
26. अद्भुतसागरः पृ.10
27. अद्भुतसागरः पृ..15
28. अद्भुतसागरः पृ.15
29. विष्णुधर्मोत्तरवचनम्
30. अद्भुतसागरः पृ.11
31. बृ.सं 46-05
32. बृ.स. 46
33. अद्भुतसागरे बृहस्पतिवचनम्
34. बृ.सं. 46-15,16
35. अद्भुतसागरे मत्स्यपुराणवचनम्
36. अद्भुतसागरे मत्स्यपुराणवचनम्
37. अद्भुतसागरे गर्गवचनम्


**(सहायकाचार्यः ज्योतिषविभागः)**

ISSN 2456-3420

# वास्तुशास्त्रे गृहनिर्माणसम्बद्धवनस्पतीनामुपयोग विमर्शः

**प्रस्तावना-**

मानवजीवने वेदानां महत्वपूर्णं स्थानमस्ति। वेदाः षडङ्गेषु विभज्यन्ते। शिक्षा, कल्प, व्याकरणं, निरुक्तः, छन्दः, ज्योतिषं षडवेदाङ्गानि सन्ति। ज्योतिषशास्त्रं वेदस्यचक्षुः इति मन्यते। ज्योतिषशास्त्रे सिद्धांत-संहिता-होराश्च त्रयः स्कन्धाः सन्ति। सिद्धांतस्कन्धे गणितीयसिद्धांतानां सोपपत्तिकं विवेचनं भवति। तदाधारेण होरास्कन्धे मानवजीवने घटितघटनानां व्यष्टिःरुपेण विचारः क्रियते। ज्योतिषशास्त्रस्य संहितास्कन्धे वनस्पतिविज्ञानं, वृष्टिविज्ञानं, मुहुर्तविज्ञानं, वास्तुविज्ञानादिविषयाणां विस्तृतविवेचनं प्राप्यते। उपरोक्तचर्चामाध्यमेन वक्तुं शक्नोति यत् ज्योतिषशास्त्रस्य क्षेत्रं बहुव्यापकः वर्तते। ज्योतिषस्य विविधविषयेषु वर्तमानकाले लोकव्यवहारिकः प्रसिद्धश्च वर्तते वास्तुशास्त्रम्।

वास्तुशास्त्रे गृहनिर्माणसम्बद्धवनस्पतीनामुपयोगित्व-विमर्शः अस्मिन् विषये वर्णनमस्ति। गृहनिर्माणे विभिन्नवस्तनामूपयोगः भवति यथा- मृदा, बालुका, काष्ठः इत्यादि। तस्मिन्नेव गृहनिर्माणे कः काष्ठः उपयोगी भवति। गृह समीपे कः वृक्षः रोपणीयः ? अयमपि शोधस्य प्रमुख विन्दुः अस्ति। अस्मिन् विषये विभिन्नदैवज्ञानां मतमस्ति।

वर्तमानकाले अस्माकं समक्षे पर्यावरणप्रदूषणस्य महती समस्या वर्तते। सम्पूर्णं पर्यावरणं प्रदूषितं जातम्। वायुप्रदूषणं प्राणीनां श्वास प्रवासनेन रोगग्रस्तं भवति। येन प्राणिनः नाना हृदयरोगग्रस्ताःभवन्ति। अस्मात्कारणादेवबहवो मनुष्याः शुध्दवायोरभावे प्राणान् त्यज्यन्ति। वायुः अस्माकं हृदयाय सुखस्य भावकमौषधं प्राप्नोति।

प्राचीनकाले अस्माकं देशे पर्यावरणशुद्धतायै वनोपवनानां, वृक्षगुल्मलतादीनाम् रोपणं कुर्वन्ति स्म। वृक्षरोपणं न केवलं प्रदूषणं शमनं करोति अपितु प्राणवायुमपि ददाति, जलस्रोतांसि रक्षति। यथा वायुः अस्मभ्यं सुखशान्तिसम्पन्नतारोग्यता ददाति। अत एव वृक्षारोपणमवश्यमेव कर्तव्यम्। यथोक्तम् ऋग्वेदे-

**वनस्पतिं वनं आस्थापयध्वं निषूदधिध्वम् अखनन्त उत्सम्।**[1]

वृक्ष- लता - गुल्मादीनां छायां बिना जलाशयाः वापीकूपतडागादि न शोभन्ते। अत एव जलाशय समीपे वृक्षारोपणं करणीयम्।

**प्रान्तच्छायाविनिर्मुक्ता न मनोज्ञा जलाशयाः।**
**यस्मादतो जलप्रान्तेष्वारामान् विनिवेश्येत्।।** [2]

सर्ववृक्षाणां रोपणार्थं मधुरा भूमि शुभदा। अतस्तस्यां भूमौ प्रथमं तिलान् वपेत्। तांस्तिलान् सञ्जात्कुसुमान् तत्रैव मर्दयेत्। एतद् भूमेः प्रथमं कार्यम्। उक्तं च

**मृद्वीः भूः सर्ववृक्षाणां हिता तस्यां तिलान् वपेत्।**
**पुष्पितांश्च मृद्नीयात् कर्मैतत् प्रथमं भुवः।।** [3]

गृहनिर्माणे गृहस्यसमीपे वा प्रशस्त औषधियुता, द्रुमलतायुतः मधुरंगन्धयुतः शोभनः, स्निग्धा, सस्नेहा भूधरा प्रयोगं कुर्वन्ति या भूधरा प्राणिनां सदैव श्रियं ददाति।

**शस्तौषधिद्रुमलता मधुरा सुगन्धा**
**स्निग्ध समा न सुषिरा च महीनराणाम्।**
**आप्यध्वनि श्रमविनोदुपागतानां**
**धत्ते श्रियं किमुत शाश्वतमन्दिरेषु।।**[4]

गृहसमीपं के के वृक्षाः रोपणीयाः? अत्रोच्यते निम्बाशोकनागकेशरशिरीषप्रियङ्गवः एते वृक्षाः गृहस्य समीपे अङ्गणे उद्याने वा प्रथमतो रोपणीयाः यतो हि एते माङ्गलिकवृक्षाः कथ्यन्ते।

**अरिष्टाऽशोकपुन्नागशिरीषाः सप्रियङ्गवः।**
**माङ्गल्याः पूर्वमारामे रोपणीया गृहेषु वा।।**[5]

बृहत्संहितायाम् वस्तुविद्याध्याये एवमेव उक्तम्-

दक्षिणे पाकरः, प्रतीच्ये वटवृक्षः उदीच्ये उदुम्बरः, प्राच्ये पिप्पलः अशुभं तथाश्च उदीच्ये पाकरः, प्राच्ये वटवृक्षः, याम्ये उदुम्बरः, प्रतीच्ये पिप्पलश्च शुभं भवति।

**याम्यादिष्वशुभफलाः जातास्तरवः प्दक्षिणेनैते।**
**उदगादिषु प्रशस्ताः प्लक्षवटोदुम्बराश्वत्था।।**[6]

कण्टकिवृक्षाः खदिर, वबूल इत्यादयः गृहसमीपे यदा रोप्यति तदा शत्रुभयः भवति।

दुग्धयुक्तवृक्षाः गृहस्य समीपे रोप्यति तदा धननाशम भवति। फलयुक्तवृक्षाः गृहस्य समीपे यदा रोप्यति तदा सन्ततिः हानिः भवति। अस्य वृक्षस्य काष्ठाः गृहे प्रयोगः अशुभं भवति।यदि कण्टक वृक्षान् छिन्द्यात् तेषां मध्ये अन्यान् पूजितान् वृक्षान् वपेत् यथा - पुन्नागाः. अशोकाः, कटहदलः, शमीशालः तर्हि एतेषां दोषा न बाध्यन्ते। उक्तञ्च-

**आसन्नाः कण्टकिनो रिपुभयदाः क्षीरिणोऽर्थनाशाय।**[7]

वर्णानुसारेण शुभाशुभवृक्षाः कथ्यन्ते-

देवदारुचन्दनशमीमधूका एते वृक्षाः ब्राह्मणेभ्यः सर्वेषु कार्येषु शुभं भवन्ति।

खदिकवित्वार्जुनशिंशयाः एते वृक्षाः क्षत्रियेभ्यः शुभं भवन्ति। शलतूनीकसरलाः एते वृक्षाः राजगृहे शुभाः भवन्ति। खदिरसिन्धुस्पन्दन एते वृक्षाः वैश्यानां शुभदाः भवन्ति। तिन्दूकार्जुनशाशावैसराम्राः तथान्ये कण्टकाः वृक्षाः दुग्धयुक्तवृक्षाः शूद्राणां कृते शुभदाः भवन्ति। [8]

देवदारुचन्दनशमीशिंशपाखादिरशाला: एते वृक्षा: सर्वदातिषु शुभं भवति। एकजात्या द्विजात्या त्रिजात्या वृक्षा वा सर्वेषु गृहेषु रोपणीया:। यतो हि एते शुभदा: भवन्ति। अधिकजात्या वृक्षा: न रोपणीया:। एकजातिवृक्षस्य यत् काष्ठगृहं तत् सर्वदु:खनियामकं, द्विजातिवृक्षस्यकाष्ठगृहं मध्यमम् , त्रिदातिवृक्षस्य काष्ठगृहमधमम् भवति।[9]

सदुग्धकण्टका वृक्षा: गृहसमीपे न रोपणीया:। चम्पक-पाटलकदलीजातीकेतक्यादय: वृक्षा: शुभदा भवन्ति। प्रहरान्तरं कस्य वृक्षस्य छाया गृहोपरि पतति चेत् तत् शुभाय न भवति। ब्रह्ममन्दिरात् पृष्ठत: विष्णुसूर्यशिवमन्दिराणामग्रे देवीमन्दिरं परितश्च गृहं न निर्मायते।[10] सदुग्धवृक्षा: हानिकरा:, सकण्टका:शत्रुभयदा: फलयुक्ते वृक्षा: सन्ततिनाशका: भवन्ति। पीतपुष्पयुक्ता: वृक्षा: गृहस्य समीपे अशुभा भवन्ति। एते सर्वे गृहस्य समीपे न रोपणीया:। [11] उक्तमपि च वास्तुराजवल्लभ मते-

**वृक्षा दुग्धसकण्टकाश्च फलिनास्त्याज्या गृहाद्दूरत:**
**शस्ते चम्पकपाटले च कदली जाती तथा केतकी।**
**यामादूर्ध्वमशेषवृक्षसुरजा छाया न शस्ता गृहे**
**पार्श्वे कस्य हरेरवीशपुरतो जैनानुचण्डया: क्वचित्।।**[12]

गृहस्य पूर्वभागे वटवृक्ष:, दक्षिणभागे उदुम्बर:, प्रतीच्ये पिप्पलस्तथा उदीच्ये प्लक्ष: वृक्षा: शुभं भवति। गृहस्य पूर्वस्यां दिशि अश्वत्थवृक्ष: अग्निभयं ददाति। दक्षिणस्यां दिशि प्लक्षवृक्ष: प्रमादं ददाति। पश्चिमदिशि वटवृक्ष: शत्रुद्वारा शस्त्रघातं करोति। उत्तरस्यां दिशि उदुम्बर: व्याधिं करोति। एतद् वृक्षा: यदि गृहस्य समीपे विपरीतदिशि स्थिता: अशुभफलं ददाति। [13]

**विष्णुसंहितायां एवमेव कथितम् -**

**न्यग्रोधोदुम्बराश्वत्थप्लक्षा पूर्वादय: शुभा:।**
**एतेव्यस्ता: समस्ता: वा शस्ता वामास्त्वकामदा:।।**[14]

अपि च -

**उदगादिषु प्रशस्ता: प्लक्षवढोदुम्बराश्वत्था:।**[15]

गृहस्य पृष्ठत: श्रीवृक्षबिल्वादय: व्याधिं नाशयति। आमलक, देवदारु, पलाश, अशोक, चन्दन, केशर, खदिर, चम्पक, कदली, नागलता एते सर्वे वृक्षा: सर्वत्र शुभं भवति। [16]

**बृहद्वास्तुमालायामेवमेव उक्तम् -**

यस्मिन् वृक्षोपरि भूतवास: भवेत स न रोप्यति। बिल्व:, शमी, अशोक:, मौलसिरी, पुन्नाग वृक्षा: अपि न छेतव्या। द्राक्षालता, चन्दनवृक्ष:, पिप्पलीं , दाडिम: गृहस्य समीपे रोपणं शुभं भवति। गृहस्य उत्तरे कपित्थ:, पूर्वे वटवृक्ष:, दक्षिणे पाटल:, पश्चिमत: पीपल: शुभं भवति। [17]

पुन्नाग, फलादारवृक्ष:, निम्ब:, दाडिम:, अशेक:, जाती, नागकेशर:, केशर:, चन्दनं, वच:, अपराजिता, विल्व:,आम्र:, भृङ्ग:, नारिकेलवृक्षा: सर्वत्र शुबदा भवन्ति।

**निष्कर्ष:-**

वर्तमानकाले वृक्षारोपणं महापुण्यदायकं कार्यं वर्तते। वृक्षारोपणं न केवलं प्रदूषणशमनं करोति अपितु प्राणिन: शुद्धप्राणवायु: ददाति। वृक्षवनस्पतीनां रोपणं वायुप्रदूषणं महती हानि: भवति। य: जन: राजमार्गं, ग्राम्यसमीपे, अन्यमार्गं वा सुन्दरान् मनोहरान् वृक्षान् रोप्यतिकूपांश्चतडागान् निर्माति स: अन्तकाले स्वर्गं गच्छति। वृक्षारोपणेन लतारोपणेनसदा दानं यज्ञतुल्यं फलं प्राप्नोति।

## सन्दर्भग्रन्थ:


1. बृहत्संहिता, पण्डित श्री अच्युतानन्द झा, चौखम्भाविद्याभवन वारणसी, 2005
2. बृहद्वास्तुमाला, श्री रामनिहोर द्विवेदी, ब्रह्मानन्द द्विवेदी, चौखम्भासुरभारती प्रकाशन 2012
3. वास्तुराजवल्लभ: , पं. रामयत्न ओझा, श्री अनूपमिश्र:, संस्कृत पुस्तकालय वाराणसी, 1996
4. वास्तुसार:, डॉ. देवीप्रसाद त्रिपाठी, परिक्रमा प्रकाशन दिल्ली
5. मनुष्यालय चन्द्रिका, डॉ. श्रीकृष्ण जुगनू, चौखम्बा कृष्णदास अकादमी, वाराणसी, 2016
6. वास्तुरत्नावली, डॉ. श्रीकृष्ण जुगनू, चौखम्भा पब्लिशर्स वाराणसी, 2009


## सन्दर्भा

1 ऋग्वेद संहिता 6.48.17
2 बृहत्संहिता,वृक्षायुर्वेदाध्याय:,श्लेकसंख्या 1
3 बृहत्संहिता,वृक्षायुर्वेदाध्याय:,श्लोक संक्या 2
4 बृहत्संहिता, वास्तुविद्याध्याय: श्लोक संख्या 86
5 बृहद्वास्तुमाला, वृक्षायुर्वेदाध्याय:,श्लोक संख्या 3
6 बृहत्संहिता, वास्तु विद्याध्याय:, श्लोकसंख्या 83
7 बृहत्संहिता, वास्तु विद्याध्याय:, श्लोकसंख्या 84, 85,
8 विश्वकर्मप्रकाश: 9. 1-4 9 विश्वकर्मप्रकाश: 9.7-10
10 बृहद्वास्तुमाला गृह पशुहहनिर्माण चरणिविचार: श्लोक संख्या 9 पृष्ठ संख्या 125
11 बृहद्वास्तुमाला,पशुगृहनिर्माणचरणविचार:, श्लोकसंख्या 10 पृ सं 125
12 वास्तुराजवल्लभ:, प्रथमोऽध्याय:, श्लोकसंख्या 28
13 मनुष्यालयचन्द्रिका 1.22- 23
14 विष्णुसंहिता 12.18
15 बृहत्संहिता, वास्तुविद्याध्याय:, श्लोकसंख्या 83
16 मनुष्यालयचन्द्रिका 1.24
17 बृहद्वास्तुमाला पशुगृहनिर्माणचरणिविचार: श्लोकसंख्या 11 पृष्ठ संख्या 126

ISSN 2456-3420

# भारतवर्षे वृक्षायुर्वेदस्य परम्परा

भारतीयमुनिभिः आदिकालादेव ज्ञानस्य विभिन्नशाखासु विचारः कृतः। इतोऽपि नैकानैकविषयाणां प्रवर्तनं वृतमस्ति। विषयाणां शाखानां ज्ञानं तु अस्ति तथा च नैकाः शाखाः विषयाः वा कालचक्रवीथ्यां लुप्ताः सञ्जाताः। केचन अल्पज्ञातावस्थायां स्थिताः सन्ति। मोदस्य विषयोऽयं यत् अधुनापि भारतीयशास्त्रपरम्परायां केचन विषयाः अवस्थिताः सन्ति। तेषु 'वृक्षायुर्वेदः' इति महत्त्वपूर्णः विषयः संहिताग्रन्थेषु उपलभ्यते। विषयेऽस्मिन् आधुनिकशोधच्छात्रेभ्यः शोधस्य अवसराः विद्यन्ते यतोहि साम्प्रतिके काले एतेन सम्बद्धविषयेषु शोधः अतीव सुकरः उपयोगी च वर्तते। प्राचीनकाले विश्ववल्लभपराशर-वराहमिहिरादिभिः मुनिभिः एव विषयः संहिताग्रन्थेषु प्रतिपादितः वर्तते। इतेऽपि अग्निपुराणे अथर्ववेदे च मुख्यरूपेण वृक्षायुर्वेदस्य विचारः कृतः वर्तते। पुराणे ,वेदेषु ,संहिताग्रन्थेषु, पर्यावरणशिक्षायाम्, आयुर्वेदेशास्त्रेषु च वृक्षायुर्वेदस्य वर्णनं प्राप्यते। आधुनिककाले तु पर्यावरणशिक्षायाः अध्ययनं प्रथमकक्षातः एव प्रारब्धं वर्तते। पर्यावरणेन साकमस्माकं सम्बन्धः जन्मतः मृत्युः पर्यन्तं भवति। अतः पर्यावरणविषये विचारः अपेक्षितः।

**अल्पज्ञातशास्त्रेषु वृक्षायुर्वेदः-**

चिकित्सायां हस्तीनां चिकित्सार्थं व्याधीनां निराकरणाय च यस्य रचयिता पालकप्यमुनिः आसीत्। पालकाप्यमुनिः (गजशास्त्रस्य) 'गजशास्त्रम्' इति नाम प्रदत्तमिति पुराणेषु वर्णयन्ते।[1] मत्स्यपुराणाधारेण वीरसोमः हस्तिशास्त्रस्य प्रवर्तकः मन्यते। बृहत्संहितायामपि इदं शास्त्रं विवृतम्। विष्णुधर्मोत्तरपुराणेऽपि दृश्यते। भट्टोत्पल-टीकायां वीरसोमस्य नाम आगच्छति।

एवमेव प्रकारेण अश्वायुर्वेदोऽपि एकः स्वतन्त्रग्रन्थः विद्यते। अश्वायुर्वेदस्य सुप्रसिद्धग्रन्थः शालिहोत्रसंहिता अस्ति। ग्रन्थोऽयं हमघोषस्य पुत्रेण शालिहोत्रेण लिखितः। आयुर्वेदग्रन्थेषु अश्वायुर्वेदस्य विचारः विहितः। यथा- अश्ववैद्यकः अश्वशास्त्रम्, शालिहोत्रम्, शालिहोत्रसमुच्चयः लीलावती, मत्स्यपुराणम्, गरुढपुराणम्, विष्णुधर्मोत्तरपुराणादयः। पशुचिकित्सायां 'गवायुर्वेदः' इत्यपि ग्रन्थ प्राप्यते। प्राचीनकाले वाहनोपयोगीयुद्धपयोगीपशूनां चिकित्सार्थं पृथक् रूपेण आयुर्वेदानां निर्माणं कृतमस्ति। तथैव गोः स्थानमपि विशेषत्वेन विद्यते। चरकेन गोचिकित्सायां वर्णनं कृतम्। बृहत्संहितायां गोलक्षणाध्याये तथा च शार्ङ्गधरपद्धतौ गोचिकित्साविषयकाः अष्टादशश्लोकाः सन्ति। गरूडपुराणे गवायुर्वेदस्य संक्षिप्तपरिचयः प्राप्यते। अतः सम्भवति यत् मत्स्यायुर्वेदोऽपि भवितुमर्हति स्म।

**अन्तश्चेतनया युक्ताः वृक्षाः-**

आयुर्वेदीयविषयेषु बहुत्र वृक्षाणां वनस्पतीनां चिकित्सायाः परम्परा आसीत्। सैव परम्परा वृक्षायुर्वेद नाम्ना अभिहिता। महर्षिभिः सर्वेषां चेतनप्राणीनां चिकित्सा, व्याधिनिराकरणस्य च महान् प्रयासः कृतरासीत्। वृक्षाणां गणना चेतनप्राणीषु भवति तथापि एते अन्तश्चेतनया युक्ताः मन्यते।

वृहदारण्यकोपनिषदि महर्षिः याज्ञवल्क्यः प्राणिनामिव वृक्षाणां चैतन्यगुणान् वर्णयति। पौराणिकग्रन्थेषु भुवनकोषः तथा चोत्पत्तिसम्बन्धप्रकरणेषु वृक्षोत्पत्तिरपि मुख्यसर्ग उच्यते। यस्यार्थः प्राम्भिकचैतन्यं गृह्यते। ब्रह्मपुराणे-

**सर्वतस्मसा चैव बीजकुम्भलता वृतः।**
**वहिरन्तश्चाप्रकाशस्तथा निःसंज्ञ एव च॥**
**यस्मात् तेषां कृतबुद्धिर्दुःखानि करणानिच।**
**तस्मात् ते संवृतात्मानो नञा मुख्या प्रकीर्तिता॥**[2]

कूर्मपुराणे एवमेव किञ्चित् वृक्षेभ्यः उक्तम्। पुराणेषु वृक्षसृष्टिं मुख्यसर्ग- रूपेण उच्यते तथा च स्थावरसृष्टिमुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः।[3] वायुपुराणेऽपि एषा एव शब्दावली दृश्यते। अतः स्पष्टयति यत् वृक्षः चेतनप्राणी अस्ति। यः तामसाज्ञानेन बाह्यतः आवृतः वर्तते परञ्च अन्ततः सः ज्ञानवान् भवति।

**अप्रतिबोधवानवृक्षाः -**

विष्णुपुराणे उच्यते यत् उद्भिदः पञ्च- भागेषु विभक्तः सन्ति। तेऽपि अप्रतिबोधवन्त अर्थात् तेषां स्वस्यविषये ज्ञानं नास्ति। शब्दादिबाह्यविषयेषु साकमेव आनन्दादिषु अन्तस्थविषयेषु अपि इयं अपि ज्ञानविहीनः अस्ति।[4] वृक्षेषु चैतन्यतत्त्वावधारणा प्राचीनकालादेव विकसिता। सृष्ट्यारम्भेऽपि सर्वप्रथमं वृक्षस्योत्पत्तिः अभूत्। महाभारते उच्यते यत् वृक्षः जीव एव। यथाः - भित्वा तु पृथिवी यानि जायन्ते कालपर्ययात्। उद्भिजानि च तान्याहुर्भूतानि द्विजसत्तमाः। शाङ्करभाष्ये यथा- भूमिम् उद्भिद्य जायते वृक्षादिकम्।[5] श्रीधरस्वामी वदति-

**सुखदुःखयोश्च ग्रहाणाच्छिन्नस्थ च विरोहणात्।**
**जीव पश्यामि वृक्षाणां अचैतन्यं न विद्यते॥**[6]

**वृक्षोत्पत्तेः विचारः**

पुराणेषु वृक्षविषयकाः नैका विचाराः प्राप्यन्ते। वृक्षानधिकृत्य प्रचलितानां कथानां प्रसङ्गैः साकं व्रतोवासादीनां केवलं कल्पना न भूत्वा व्यवहारिक सर्वोपयोगी विषयः आसीत्। सर्वप्रथमं प्रसडअगेऽस्मिन् बीजस्य क्लपना अभूत। यथा-

**यथा च पादपो मूल स्कन्ध-शाखादि संयुत।**
**आद्यबीजात् प्रभवति विजान्यन्यनि वैसतः॥**
**प्रभवति तत्सते भ्यो भवन्त्यन्ये परे द्रुमा।**
**तेऽपि तल्लक्षण द्रव्य कारणामुगता द्विजाः॥**[7]

आद्यबीजात् मूलस्कन्धयुक्तवृक्षस्योत्पत्तिर्भवति। तस्मात्पुनः बीजानि उम्पद्यन्ते। तस्मादनन्तरं वृक्षः भवति। बीजात् वृक्षः स्वकारणधर्मस्मानुकरणं करोति। अयमेव क्रमः अनवरतरूपेण चलति तथा च सृष्टेः निर्धारणं करोति। ब्रह्मपुराणे उच्यते यत् वृक्षेषु जीवनं तु अस्त्येव यत्र वृक्षाः सन्ति तत्र जलं जीवनञ्चापि अस्ति। तस्मिन् काले जलस्य नियन्त्रणाय वृक्षारोपणं भवति स्म।

**वृक्षाविद्या**

पुराणाचार्यः रामशङ्करभट्टाचार्यः वृक्षविद्यां उद्भिद्विद्यानाम्ना वदति।[8] वृक्षं नारायणरूपेण वर्णयति। विष्णुपुराणबाधारेण मन्यते विष्णोः य ज्ञाङ्गभूततरूपः जगतसिद्धिसाधनमस्ति यथाः– यज्ञाङ्गभूत यद्रूप जगतः सिद्धिसाधनं वृक्षादिभैदैर्यद्भेदि तस्मै मुख्यात्मने नमः।[9] अत्र मुख्यतयारूपेण वृक्षात्मायाः विचारः कृतः वर्तते। भट्टाचार्यः यज्ञाङ्गभूतरूपेण वृक्षं तदर्थं जानाति यतोहि यज्ञक्रिया–सम्पादने वृक्षनिर्मित्तद्रव्यानाम् आवश्यकता भवति तदेव कारणम्

**वृक्षस्य भेदाः–**

वृक्षाणां भेदेषु भारतीयमहर्षिभिः वर्गीकरणं प्रस्तूयते। यथा भागवतकारः षडभेदान् कथयतिः–

**1. वनस्पतिः**– पुष्पं विना एव यस्मिन् फलमागच्छति। ते वृक्षाः वनस्पति रूपेण ज्ञायन्ते।

**2. औषधिः**– फलपाकान्ताः अर्थात् फलानां पक्के सति विनाशः भवति ते औषधिरूपेण ज्ञायन्ते।

**3. लता**– आरोहणोपेक्षा लता अर्थात् कस्यचित् सहाय्येन चलति सा लता।

**4. त्वक्सारः**– वेणुः बाँस, बरुः इत्यादयः।

**5. वीरुध्** – कठिनतया चलनशीलाः आरोहणानपेक्षाः या वल्लयः ताः वीरुध् मन्यन्ते।

**6. द्रुमः**– ये वक्षाः पुष्पेण साकं फलन्ति ते द्रुमाः।

मार्कण्डेयपुराणे वृक्षाणां वर्गीकरणं दृश्यते। विष्णुपुराणाय पान्तरे.... श्रीधरस्वामिना षड्भेदाः वृक्षाणां उक्तः। यथा– वृक्ष गुल्म –लता वीरुध्–तृण त्वक्साराः।

वृक्षस्य नामसहित प्रकाराणां गुणधर्माणां विस्तृतं शब्दकोषं निर्मितुं शक्यते। पुराणेषु स्मृतिषु च काव्यविद्भिः वृक्षसम्बन्धानां शब्दानां पर्यायाः प्रयुक्ताः सन्ति। यथा– बीजाम्, अङ्कुर, मूलम्, स्कन्धः, विट्डुः सारम् महाशाखा, उच्चशाखा, पल्लवः , महापत्रम्, महाभाष्यम्, अग्रपुष्पम् अभिसञ्चिनम्, सेचनादयः। एवं प्राकारेण भारतीयविद्यावाङ्मये वृक्षसम्बन्धज्ञानं मिलति। पुराणेषु वृक्षविद्या समाहिता। अतः वृक्षपूजा, वृक्षपर्वम्, वृक्षपर्णम्, वृक्षोत्सवः, वृक्षच्छेदनविधानम्, शुभशुभवृक्षलक्षणम्, वृक्षायुज्ञानम्, वृक्षोत्पात्, वृक्षावासः वृक्षोपासना इत्यादीनां ज्ञानशाखानां विस्तारं कृतः। येषामुल्लेखः ज्योतिषवास्तुचिकित्साशास्त्रेषु स्वतन्त्ररूपेण दृष्टिपथे आगच्छति।

अथर्ववेदे तु कृत्याप्रयोगः अभिचारकर्म , यातुधानक्रिया इत्यादीनां विफलतार्थं विविधवृक्षं विना औषधीनाञ्च शताधिकाः प्रयोगाः दर्शिताः। एतेषु दर्शमणिः, औदुम्बरमणिः, वरमणिः, औषधीनां रसनिरमिता वैयाघ्रमणिः इत्यादयः प्रयोगा विचारणीयाः। अथर्ववेदे वृक्षसम्बन्धविचाराः सर्वाधिकाः सन्ति। वृक्षायुर्वेदस्य मूलमिदं शास्त्रम्।

**वृक्षावयवेषु वाङ्मयस्य नामकरणम्**

वाङ्मये नैकाः ग्रन्थाः विषयाः वा सन्ति यथा व्याकरणम्, ज्योतिषम्, धर्मशास्त्रम्, काव्यशास्त्रम्, वेदान्त–वैद्यक–अलङ्कार–कोष–इतिहास–नीतिशास्त्र–कामशास्त्राणि सन्ति। यस्मिन् कस्मिन्नपि शास्त्रसम्बद्धविषयाः स्युः। तेषु वृक्षाङ्गवाचीशब्दाः प्रयुज्यन्ते। यथा – लता,मञ्जरी, पल्लवः,कलिका, गुच्छकः, कदली, बीजम्, वल्ल्यादयः। वृक्षसम्बद्धविषयाणां ज्ञानाय उपरोक्तशब्दानां प्रयोगः एव अधिकतया भवति। वृक्षाः देवरूपेण मन्यन्ते। अतः जनाः तान् पूजा–बलि–मांसादिद्वारा तोषयन्ति। भारतीयमनीषा सर्वोपयोगीवृक्षवैभवस्य रक्षायां सर्वदा रतास्ति। वैदिककालादेव कृषिवृक्षादिसम्बद्धव्याधीनां निवारणाय कीटादीनां नाशाय,चटकादिभ्यः रक्षणायच बहवः उपायाः क्रियन्ते एव। वृक्षाणां पर्यावरणाय औषधीरूपेण जीवनोपयोगाय प्राधान्येन संरक्षणाय च प्रयासाः क्रियन्ते। मुख्यरूपेण वृष्टिजन्यलाभः सस्यश्यामला धरा तथा च सुषमासहितस्वास्थ्यप्राप्तिः शुभकामनया निहितास्ति। वह्निपुराणे कुलधनवृद्ध्यर्थं पुष्पफलयुक्तवृक्षाणां संरक्षणं कर्तव्यं भवति। यथोक्तमस्ति–

**तस्मान्न छेदयेद्वृक्षान् सुपुष्पफलितान् कदा।**
**यदीच्छेत् कुलवृद्धिं च धनवृद्धिं च शाश्वतम्।।**[10]

वृक्षसंरक्षणस्य अनेन उद्देश्येन चिकित्सायाः विधयः अन्वेषिताः। वृक्षस्य वन्ध्यत्वं निविरणाय फलवतामायनाय विचित्रिकरणाय च विभिन्नोपादकद्रव्यानां प्रयोगः क्रियते। जातककाले एव वृक्षसम्बन्धिविधीनां विकासः सञ्जातः। अस्मिन् वृक्षारोपणस्य विधाः कलाश्च मुख्या आसन्। जातकग्रन्थेभ्यः ज्ञायते यत् वाराणस्यां एकः मालाकारः मधुराम्रान् कटुकरणे पारङ्गतः आसीत्। कालेऽस्मिन् अधिकतया फलोत्पादनं भवति स्म तथा च फलानां निरोगतायाः कृतेऽपि प्रयासाः क्रियन्ते स्मः। एतस्मात् कारणादेव वृक्षायुर्वेद इति विषयाणां स्वतन्त्र्येन प्रवर्तनमारब्धम्। कालक्रमेण नैकैभ्यः विधिभ्यः विकसनाय प्रयासाः सञ्जाताः। संहिताकारैः विषयोऽयं त्रिस्कन्ध ज्योतिषशास्त्रे योजितः।

**द्रुमाणां रोपणविधिः –**

वृक्षारोपणे नैक उपक्रमाणां प्रयोगः भवति यथा कालनिर्धारणम्, भूमिलक्षणम्, वृक्षप्रकाराः, वाटिकाविधयः, बीजवपनविधानम्, पुनरोपणम्, अन्तरप्रमाणमित्यादयः। एतेषु उपक्रमेषु चिन्तनात्पूर्वम भूमे परीक्षा आवश्यकी अतः अस्मिन् विषये पूर्वं प्रविशामः।

**भूमिपरीक्षानिरुपणम्–**

वृक्षायुर्वेदे वृक्षारोपणस्य विशेषमहत्त्वमस्ति। अतः रोपणं विना वृक्षाणां विकासः न भवितुमर्हति। विकासार्थः वृक्षाणां कृते

उचितस्थानमपि आवश्यकं भवति। यदि स्थानं उचितं न स्यात्तर्हि वृक्षस्य विकासोऽपि कालानुगुणं न भवति। अतः वृक्षानुसारं भूमिः परीक्षणीया। भूमेः प्रकाराः बहव सन्ति प्राकारानुसारेण वृक्षारोपणं भवति। तेषां प्रकाराणां वर्णनं क्रियते।

**धराभेदाः-**

**जाङ्गलाऽनूप सामान्य स्वभावात् त्रिविधा धरा।**[11]

अर्थात् प्रामुख्येन धरायाः त्रयः भेदाः स्वाभविकरूपेण च सन्ति। ते जाङ्गलः, अनूपः सामान्याः। सामान्यरूपेण भूमे ज्ञानं भवति उपरेक्त भेदेन परञ्च धरा भेदानां ज्ञानार्थं रसानां ज्ञानमपि आवश्यकम्। भूमे षड् रसाः भवन्ति। रसानां ज्ञानं भूमिवर्णेन भवितुमर्हति।[12]

यथा- **मलिनना पाण्डुरा भूमि श्यामलाधवलारुणा।**[13]

**पीतामिष्टाम्ललवणा कटुतिक्तकषाण्यिका** अर्थात् - भूमि निम्नवर्णा भवति। यथा- मलिना पाण्डूर्य, श्यामला, धमला ,अरुणा, पीताः। तासां रसाः क्रमेण उच्यन्ते। यथा- मिष्ठाम्ललवणा कटुतिक्तकषायिकाः। धरा उपर्युक्तस्वादयुक्ताः भवन्ति मतमिदं प्राचीन प्राचीनाचार्याणां विद्यते परञ्च मेदपाटनृपतिमहाराणा- प्रतापाश्रितपण्डितचक्रपणिमिश्रमहोदयानां मते वर्णानुसारं रसानां निर्धारणम् अकृत्वा मत्तिकास्वादनात् लाभयुक्तं भवितव्यम्। एतादृससी भूमि या वल्मीकयुक्ता, गर्तयुक्ता, पाषाणबहुला दुषरा, दुरोदका, शार्करिला, सविषा तरुरोपणे शुभा न भवति।

**वाटिकायोग्यायोग्यास्थाननिर्धाणम्-**

**अयोग्यभूमिलक्षणम्-**

**यस्मिन् देशे तुषारेण दह्यन्ते वल्लरी द्रुमाः।**
**बिम्विका कण्टकबहुले न कुर्यात् तत्र वाटिकाम्॥**[14]

**योग्यभूमिलक्षणम्-**

**मृदुसमासन्नजला हिता भूस्तरुरोपणे।**
**तत्रारामश्च कर्तव्यो लोकद्वयहिताय च॥**[15]

धराभेदानुसारेण प्रशस्तवृक्षारोपणम् यस्या भूमौ प्रस्तराः अधिकाः भवन्ति तथा च मृदुला भूमिः स्यात् अथवा तप्तस्वर्ण सदृशवर्णा स्यात् तस्यां भूमौ गुढपुष्पयुक्ताः पुन्नागवृक्षः राजादनवृक्षाः चम्पावृक्षाश्च प्रयत्ने विनाऽपि जायन्ते। अनूपभूमौ मुचुकंदवृक्षः, श्रीखण्डिका-केतकी-कोतकाञ्बु-कदली, अश्वमार-कुच,जामुन,मधूकाः तथा च वल्लीयुक्ताः द्रुमाः सामान्येन उपजायन्ते।

इतोऽपि विश्ववल्लभवृक्षायुर्वेदे उच्यते। यथा- शेप्माश्चम्पक-पाटलाम्र बकुला शोकाश्च साधारणे कोलोदुम्बरि-निम्बविप्पल वता ग्राम्मा सचिञ्चाशनाः।

**अक्षाक्षोट मधूक-कशिग्रुकमहानिम्बार्जुननाद्याद्रुमा। दाडिम्ययादिफलप्रधानाविटपाः पुष्पप्रधाना लताः॥**[16]

**जाङ्गलप्रदेशे रोपणप्रशस्तवृक्षाः-**

जाङ्गलप्रदेशे धव-खदिर पलाश वंश-धात्री- गुन्दिका-शिव विकट-मशाका-शल्वककी-सप्तपत्री देवदारु-दासहल्दी,तिन्दुकी-जात्पादयः वल्लयः वृक्षाः आरोपनीयाः। अतः वक्तुं शक्यते यत् भूमि परीक्षा भूमिचमनञ्च पूर्व कर्त्त भवति। वृक्षाणां प्रकारानुगुणं वातावरणाय चमनं कृत्वा भूमि परीक्ष्य वृक्षारोपणं क्रियते। सन्द्रभेऽस्मिन् चक्रपाणिमिश्रमहोदययेन उक्तं यत् उक्त क्रियन्तोऽपि मयात्र वृक्षाः उहनास्तमान्ये चतुरैश्च पुर्ततिः। क्षितिस्वभआवादिचिरेण वृद्धिं प्रयान्ति ते पुषअपफलानि दध्युः।

**उदभच्चप्रकाराः-**

प्राचीनकाले मृपाः स्वस्य प्रभाववर्धनाय विशेषत्वेन विचारं कुर्वन्ति स्म। तथा च प्रदेशनुकूला हितकरीं च वाटिका निर्मान्ति स्म। यसयां शीघ्रप्रवर्धशसीलानां वृक्षाणां रोपणं कृत्वा आकर्षकं करोति स्म। आधिनुककाले तस्ययाः एव परम्परायाः अनुसरणं क्रियते। वाटिकायाः प्रभाववर्धनाय फलयुक्तवृक्षाणां पुष्पयुक्तवृक्षाणाञ्चोपरि अवधानं दातकं भवति। वृक्षाणा प्रकाराणां वर्णनं प्रायक्रियते यथाः-

**बीजोद्भवाः काण्डभवाश्च चान्ये कंदोद्भवागुल्मलताद्रुमाद्याः।**
**उक्ता सामान्येऽपि च बीज काण्ड भवाविडेदं कथयामि तेषाम्॥**

अर्थात्- केचन वृक्षाः लताश्च बीजोद्भवाः भवन्ति। केचन काण्डभवाः तथा च केचन कंदोद्भवाः। परञ्च केचन बीजं काण्डोद्भवाः उभयाः भवन्ति ते, वर्णनं भेदानानुणम् अत्र क्रियते।

**बीजोद्भवोद्यच्चाः-**

**चिञ्चाम्रचम्पक मधूक कपित्थ जम्बू**
**पुन्नाग बिल्वबकुलाशन काञ्चनाराः।**
**सक्षीरिकाम्र पनसाक्षकलालिकेरी**
**तालादिखः सतिलकाः शलुजीजजाः स्यु॥**
**जम्बीरनिम्बुकसदाफल बीजपूर**
**नारिङ्गसेव करमर्दक चंपकद्याः।**
**कर्णीविदामकमलाख्यकपाण्डुरागाः**
**श्यामातिलक्तकमुखा इह बीजजाः स्युः॥**[17]

**काण्डरोप्याः-**

**जातिगुलालकरुणी नवमल्लिकाश्च**
**मल्ली जपातरलकुन्द शिखण्डि कुब्जाः।**
**ताम्बुनिका सलिल- केतकिकेका..**
**काण्डोद्भवाः इह मया कथिताः क्रियन्तः॥**[18]

**काण्डबीजोद्भवाः-**

**बिम्बाहास्नुही चन्द्रसिन्दुवार**
**श्रीखण्डिकाश्वत्थवटाः पलाशाः।**
**सदाढिमप्लक्षमुनिन्दुवंशा**
**द्राक्षादिकाः काण्डबीजजाः स्युः॥**[19]

**बीजोकन्दोद्भवाः-**

कन्दोद्भवाः ककुभ श्रृंगवेरविदारिका सुरण पीतिकाद्याः। एलाम्बुजनीति च बीजकन्द समुद्भवन्तीति वदन्ति धीराः रम्भादययः

वृक्षा कन्दरोप्याः काण्डरोप्याश्च भवन्ति। एतादृशेश्च वृक्षेश्चः सर्वदा अवधानं दातव्यं तथा च आरामेषु योग्यवृक्षाणामरोपमार्थं विविधबृहद्रोवनेषु स्थित-वनपालकेभ्य द्रष्टकं पृसृकञ्च भवति।

**निषिद्धाः विटपाः-**

अधुना वृक्षाणां विषये वर्णयते ये उपयोगाय लाभकराः भवन्ति परञ्च गृहस्य समीपे रोपणदृष्ट्र निषिद्धाः अथवा ते दिषादृष्ट्याणि अनुचिताः भवन्ति। गृहस्य बहिरभागे बीजपूर -जम्बू -हरिद्रा -बदरी -पलाशाः श्लेषमलक -चिञ्चा- अर्जुन-काञ्चनार- करञ्जकाः रोपणे शुभदा न भवन्ति। तथा च-

अर्थात् -गृहस्य बहिः पीतपुष्पयुक्ताः कण्टकयुक्ताः सदुग्धाः तता च कण्टकयुक्ताः वृक्षाः यदि स्युः तर्हि सुखेच्छुकजनः तेषां कर्ततनमवश्यमेव कुर्यात्।

**गृहवाटिकायां निषिद्धाः वृक्षाः-**

सामान्यरूपेण गृहवाटिकायां फलवविहिग्रन्थ पुष्पविहिनकं वृक्षाणां रोपणं न क्रियते। तथापि आधुनिककाले सौन्दर्यदृष्ट्या वृक्षाणां रोपणं अंकोल विभीतिकाद्यः वन्यवृक्षाः तता च सरम्ड सिद्धायक नीला न रोपणीयाः गृहवाटिकायायम्।

**प्रश्स्तवृक्षाः वाटिकाश्च-**

**पुष्पप्रधाना सकलाश्च वाट्यां फलप्रधानः प्रथिताश्च सार्काः।**
**लताद्रुवल्योषधयः सगुल्मा वाप्यास्त यान्ये गृहवाटिकासु॥**[20]

दिशादृष्ट्या केचन वक्षाः रोपणार्थं प्रशस्ताः भवन्ति। यथा-

प्राच्यां वटो शुभः याम्याञ्च उदुंबरिका गृहात्। पश्चिमे पिप्पलः प्रशस्तः उत्तरे प्लक्षः न विवर्जितः। अर्थात् पूर्वादि दिशाक्रमेण उपरोक्तवृक्षाः वर्जिताः न सन्ति। ये वृक्षा गृहवाटिकायां निषिद्धा सन्ति ते वृक्षाः यदि ग्रामात् बहिः वाटिका स्यात् तस्मां रोपितुं शक्नुवन्ति। यथा वृक्षाणां रोपणे विचार क्रियते तथैव ग्रामस्य दिशायाः अपि विचारः भवति यत् ग्रामाय कस्या दिशि वाटिका निर्मातव्या।

**आग्नेययययाययम्य नैर्ऋत्य निषिद्धा वाटिका पुरात्**
**सर्व पश्चिमं सौम्ये, शुभा मध्ये समारुते॥**
**दुर्गे यतामान यथावकाशं कुर्यात् साधारण वाटिका च।**
**सर्वेद्रुमास्तत्र च रोपणीया ग्राम्याश्च वन्याः अपि असति दोषः॥**[21]

अर्थात् दुर्गे मानस्थाननुसारं साधारणतया वाटिका निर्मितकाः। तस्यां विवधप्रकाराणां दुरुमाणां रोपणे दोषः न भवति यथा-

**तस्यां चम्पक मालती कुरषका निर्मोटिका भूमिका**
**श्रीखण्डी कणवीर कुंदषकुला वासंतिका सेवती।**
**कर्णीकुब्जगुलाल हेमसुमना सिद्धूरिका केतकी**
**बंधूकोमुचकुंद केतकीजपा निर्ल्ली मुक्तशुकः॥**[22]

**अन्यद्रुमा**

**मालूरो बदरीरसालकरकाश्चराशना श्रीफला**
**चिञ्चामर्दकि निम्बुपूणकिरसानूतावाश्वत्थकाः।**
**खर्ज्जूरीपनशः कपित्थ करहा पत्याश्च साञ्जीरका**
**वंशदुम्बरिशालताल जटिला रोहीतकः पाटला॥**[23]

**वाटिकायां रोपणवृक्षाः-**

**आखोटपिस्तौलकुटौविदाया ताम्बूल कैलाशपत्ति पत्रिमृद्वी।**
**अन्येऽपि रोप्यास्तरवः सगुल्म एतान्विताः पुष्पः फलोपभोग्याः॥**
**करमर्दकवंशदीन् प्राच्यां वै रोपयैद्बुधः।**
**द्राक्षा परावतान् याम्यां कपित्थाश्चैः पश्चिमे।।**
**सौम्यां लौकादिकावन्यान् यथा वर्गं नियोजयेत्।**
**वाट्यामुत्कांतरे तद्वच्छेष्टमध्याधमान्स्तरुन्॥** [24]

अद्यत्वे वनस्पतिविज्ञानमिति कञ्चन विज्ञानं पृथक्कया परिमार्जितं परिवर्धितञ्च विद्यते। पर्यावरणविज्ञानमपि पृथक्कया वृक्षाणामध्ययनं करोति। आयुर्वेदे वनस्पतीनां प्रयोगः अनादिकालादेव भवत्येव। नवीनचिकित्साविज्ञाने अपि औषधनिर्माणं वृक्षाणां तत्त्वग्रहणादेव भवति। शिक्षाक्षेत्रे वृक्षसम्बद्धम् अध्ययनं बहुविस्तृतं वर्तते। किन्तु प्राचीनशास्त्रोक्तविषयाणां परिचयाभावात् प्रसराभावाच्च निरादरणं सर्वत्र दृश्यते। अनेन अध्ययनेन वृक्षसम्बन्धिप्राचीनं विज्ञानं पुनरेकवारं प्रकाशे आगमिष्यति येन नूतनानां परिशोधनानामवसरो भवितुमर्हति। गवेषणस्य नवीनानि क्षेत्राणि उत्पत्स्यन्ते। वृक्षाणां विषये अधिकाधिकशिक्षणेन प्रकृतिगतविकाराणां निदाने अपि नूतनोपायाणामाविष्करणं भवितुमर्हति।

लुप्तानां वृक्षाणां प्रयोजनज्ञानं यदा जनेषु भवति तदा तेषां रोपणं पालनं रक्षणं च भविष्यति। वृक्षो रक्षति रक्षितः इति उक्तिः सार्थकी भविष्यति। वातावरणे अश्वत्थादिवृक्षाणां रोपणेन मानसिकशारीरिकपीडानां निदाने सुगमता भविष्यति।

## सन्दर्भसूची


1 गरुडपुराणम्, अ.201.
2 ब्रह्माण्डपुराणम्-1,5,33-34.
3 कूर्मपुराणम्-1,5-15.
4 विष्णुपुराणम्-1,5,6-7.
5 शाङ्करभाष्यम्, रत्नप्रभा-3-2-21
6 महाभारतम्, शान्तिपर्वम्-184-17.
7 इतिहास पुराण का अनुशीलन पृ.122.
8 इतिहास पुराण का अनुशीलन पृ.123.
9 विष्णुपुराणम्-3,17,29.
10 इतिहास पुराण का अनुशीलन पृ.123.
11 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -1
12 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -1
13 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -2
14 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -5
15 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -6
16 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -9
17 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -15
18 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -16
19 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -17
20 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -24
21 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -28
22 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -29
23 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -30
24 विश्ववल्लभवृक्षायुर्वेदः तृतीयोल्लासः श्लोक सं. -32,33,34.

ISSN 2456-3420

# प्राकृतिकजलसरोवराणामौषधीय महत्त्वम्

सुशान्त कुमार

**भूमिका-**

**क्षितिजलपावक गगन समीरा।**

**पञ्चरचित यह अधम शरीरा।।**[1]

पञ्चतत्वैः निर्मितं मानवशरीरं एकमपि तत्वं विना अस्तित्वे नागच्छति। एतेषु पञ्चतत्वेषु जलतत्वमस्ति अन्यतममङ्गम्। जलतत्वं पृथ्व्यां मानवशरीरे च प्रायः अधिकमात्राषु प्राप्यते। जलोत्पत्तिविषये पौराणिकमतानुसारं कथ्यते यत् सर्वप्रथममाकाशं तदनन्तरं वायु-अग्नि-जल-पृथ्व्यादि तत्वानामुत्पतिः क्रमेण भवति। एवमाधुनिक भौतिकविज्ञानमतानुसारं जलोत्पत्तेः कारणं हाईड्रोजन + आक्सीजन इत्यनयोः पदार्थयोः मिश्रणं भवति। तत्र पौराणिक मतानुसारं वायुतेजयोः प्रक्रियया जलोत्पत्तिः भवति। यदि वयं वायुमित्युक्ते गैसानां समूहं तथा तेजमित्युक्ते विद्युतं मन्यते चेत् द्वयोः सिद्धान्तयोः किमपि अन्तरं नैव प्राप्यते।अतएव जलोत्पत्तेः पौराणिकं सिद्धान्तं वैज्ञानिकैः अपि मन्यते। जलोत्पतिः विषये श्रीमद्भगवतगीतायामपि वर्णनं प्राप्यते यथा-

**अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः।**

**यज्ञाद् भवन्ति पर्जन्यो यज्ञः कर्मसमुद्भवः।।**[2]

एवञ्च जलावश्यकता विषये यथोक्तं-

**धर्मार्थकाममोक्षेषु नाशुद्धस्य गतिर्मता।**

**तस्माद्देहो मनश्चितं सर्वयत्नेन शोधयेत्।।**[3]

जलं विना मानवशरीस्य बाह्यशुद्धिः नैव भवितुं शक्यते। जलं प्रकृत्याः अभिन्नं घटकं वर्तते यतोहि प्राणिनां जीवनं पृथ्व्यां जलं विना सम्भवः नास्ति। मानव शरीरे 70 प्रतिशतं जलं वर्तते। जलाभावेन प्रायः मानवशरीरे रोगानामुत्पतिः जायते। एवञ्च जलस्य उचितमात्रायाः पानेन रोगात् मुक्तिः प्राप्तुं शक्यते। येन प्रकारेण जलं वृक्षाणां वृद्धौः जीवनपर्यन्तमावश्यकं वर्तते तथैव मानवजीवनस्य निर्वहणेऽपि जलमत्यावश्यकं वर्तते। जलं विना अस्माकं दैनिककार्यकलापः सम्पूर्णतां न प्राप्नोति। यथा भोजननिर्माणं, शारीरिकनिर्माल्यं, वस्त्रप्रक्षालनं, गृहनिर्माल्यार्थञ्च जलस्येवावश्यकता वर्तते। प्रायः मानवस्य सर्वाणि कार्याणि जलेनेव सिद्ध्यति।

**जलप्राप्तेः साधनानि -**

**धर्म्यं यशस्य च वदाम्यतोऽहं दकार्गलं येन जलोपलब्धिः।**

**पुंसां यथाङ्गेषु शिरास्तथैव क्षितावपि प्रोन्नतनिम्नसंस्थाः।।**

**एकेन वर्णेन रसेन चाम्भश्च्युतं नभस्तो वसुधाविशेषात्।**

**ननारसत्वं बहुवर्णतां च गतं परीक्ष्यं क्षितितुल्यमेव।।**[4]

प्रायः अस्मिन् संसारे पातुं योग्यजलं वृष्टिरूपेण पृथिव्यामागच्छति। तदेव जलं स्थानभेदात् विभिन्नरूपेण अस्माभिः प्राप्यन्ते। अस्मात् कारणादेव जलस्य स्वादेः गुणनतायाश्च वैविध्यं लोके दरीदृश्यते। एतस्मात् कारणात् जीवनरक्षकं जलं प्रकृत्यां त्रिभिधा उपलभ्यते।

1 वृष्टिजलम्

2 भूपृष्ठीयजलम्

3 भूमिगतजलम्

**1 वृष्टिजलम् -**

जलप्राप्तेषु साधनेषु वृष्ट्याः जलं वर्तते अन्यतमः। वृष्टिकाले यदा प्रथमं वारं वृष्टिः भवति तदा वायुमण्डलीय रजकणैः युक्तं जलं अशुद्धतां प्राप्नोति। परञ्च यदा वृष्टिः निरन्तरं भवति चेत् वार द्वयं त्रयं वा शुद्धं जलं प्राप्यते। एतत् जलं प्राणिनां कृते शुद्धमुपयोगी च वर्तते।

**2 भूपृष्ठीयजलम्-**

भूमेः पृष्ठीयक्षेत्रे यत् जलं प्राप्यते सैव जलं भूपृष्ठीयजलनाम्ना ज्ञायते। यथा नदी, तडागः, निर्झरः प्राकृतिकसरोवरः कृत्रिमसरोवरमित्यादयः रूपेण भूमौ उपलभ्यन्ते।

**3 भूमिगतजलम्-**

जलमेतत् भूमिगर्भे वर्तते। जलमेतत् भूमेः खननं कृत्वा प्राप्यते।एतत् भूमिगतं जलमन्य प्रकारकैः जलैः प्रायः शुद्धं वर्तते। यतोहि पृथ्वी स्वयमेव भूमिगतजलस्य शोधनं कृत्वा पूर्णरूपेण शुद्धं करोति। जलस्य शुद्धता विषये स्मृतिग्रन्थेष्वऽपि उक्तं यथा-

**भूमिं स्पृष्ट्वा गतं तोयं यश्चाप्यन्योऽन्यविप्रुषः।**

**भुक्त्वोच्छिष्टं तथा स्नेहं नोच्छिष्टं मनुरब्रवीत्।।**[5]

एतत् विभिन्नैः प्रकारकैः प्राप्तजलसाधनैः प्राकृतिकजलस्त्रोतानां जलं प्रायः औषधीयरूपेण शुद्धं वर्तते तथाऽपि कुत्रचिदेतत् प्रवहनजलमपि शुद्धमशुद्धपदार्थानां संयोगेन कुत्रचित शुद्धं कुत्रचित् अशुद्धं वा भवति। अनेन कारणेन तडाग-कूप-सरोवरादीनां जले शुद्धतायाः परिमापने वैभिन्नता दरीदृश्यते। आचार्यवराहमिहिरस्य जलप्राप्ति विषये मतं वर्तते यत् पृथिव्यां जलं द्विविधं प्राप्यते-कृत्रिमाकृत्रिम रूपेण। यथोक्तं बृहत्संहिताग्रन्थेषु -

**सलिलोद्यानयुक्तेषु कृतेष्वकृतकेषु च।**

**स्थानेष्वेतेषु सान्निध्यमुपगच्छन्ति देवताः।।**[6]

**कृत्रिमजलम्-**

मानवनिर्मितं जलस्त्रोतं यथा कूपः-बाबडी-तडागः इत्यादयः कृत्रिमजलनाम्ना अभिज्ञायते। तत्रैव नदी-निर्झर-सरोवरादयः अकृत्रिमजलरूपेण ज्ञायते। अकृत्रिमजलमेव प्राकृतिकजलस्त्रोत-रूपेणाऽपि ज्ञायते।

प्राय: पृथिव्यां जलतत्वस्यैव आधिक्यं वर्तते तथाऽपि पेयजलं निरन्तरं ह्रासं प्रति गच्छति। पेयजलस्य ह्रासं दृष्ट्वा आधुनिकवैज्ञानिका: विभिन्नरसायनप्रयोगेन अशुद्धजलं शुद्धं करोति। येन प्रकारेण प्राप्तजले प्राकृतिकगुणा: अपि नष्टा: भवन्ति। तते जलं शुद्धतां तु याति परञ्च स्वास्थ्यवर्धकं न भवति। यतोहि जलशुद्धताया: विषये ये पौराणिकमता: सन्ति तेन प्रकारेण मानव: रसायनमुक्त: शुद्धजलं प्राकृतिकगुणैश्च युक्तं प्राप्तुं शक्नुवन्ति। अशुद्धजलस्य पानस्य प्रभावविषये उक्तं यथा-

**व्यापन्नं परिहर्त्तव्यं सर्वदोषप्रकोपणम्।**

**तत् कुर्यात् स्नानपानाभ्यां तृष्णाध्मानोदरज्वरान्।**

**कासाग्निमान्द्याभिष्यन्दिकण्डूगण्डादिकांस्तथा।।**[7]

अर्थात् अशुद्धजलस्य प्रयोगेन एते विकारा: रोगा: वा जायन्ते। यथा- उदरविकार:-ज्वर-श्वास-कण्डु-चर्मरोगादय:। एवं प्रकारेण प्रयोगात् पूर्वं जलशुद्धि: आवश्यकं वर्तते। जलशुद्धता विषये संहिताग्रन्थेष्वपि वर्णनं दृश्यते। यथा -

**अञ्जनमुस्तोशीरै: सराजकोशातकामलकचूर्णै:।**

**कतकफलसमायुक्तैर्योग: कूपे प्रदातव्य:।।**

**कलुषं कटुकं लवणं विरसं सलिलं यदि वा शुभगन्धि भवेत्।**

**तदनेन भवत्यमलं सुरसं सुसुगन्धि गुणैरपरैश्च युतम्।।**[8]

अर्थात् जलशुद्धताकृते अञ्जन-मोथा-खस-राजकोशातक-आमलक-कतकादी फलानां चूर्णं उपयोगी वर्तते। एतेषां औषधीनां प्रयोगेन जले उत्पन्नविकाराणां (कडुवा-खारा-वेस्वाद-दुर्गन्ध) निराकरणं कृत्वा जलं मधुरं सुगन्धितञ्च करोति। जलमेतत् स्वास्थ्यवर्धकं वर्तते। एतस्मात् कारणात् प्राचीनाचार्यै: नदी-तडाग-कूप-निर्झर-सरोवरादीनां समीपे जामुन-वेंत-अर्जुन-महुआ-पिलखन-कदम्बादि वृक्षाणां रोपणस्यं वर्णनं अकृषत। चोक्तं बृहत्संहितायां

**ककुभवटाम्रप्लक्षकदम्बै: सनिचुलजम्बूवेतसनीपै:।**

**कुरबकतालाशोकमधूकैर्बकुलविमिश्रैश्चावृततीराम्।।**[9]

एते वृक्षा:आयुर्वेदे औषधीरूपेण अभिज्ञायते। एषां वृक्षाणां पार्श्वे गतं जलं स्वयमेव शुद्धतां प्राप्नोति यतोहि वृक्षमूलत: निसृतं जलं कूप-बाबडी-तडागादी पर्यन्तं गच्छति।

**निष्कर्ष:**

अत: प्राकृतिकजलस्त्रोताना जीर्णोद्धारं संरक्षणादि अस्मिन् काले मानवानां प्राथमिकं कर्त्तव्यं वर्तते।एवञ्च पर्यावरणदृष्ट्या सरोवराणां पार्श्वे औषधीयवृक्षाणां रोपणं संरक्षणं च कृत्वैव मानवै: औषधीयगुणयुक्तं जलं प्राप्तुं शक्यते। सरोवराणां जीर्णोद्धारस्य अतीव महत्त्वं जायते। यथोक्तं अग्निपुराणे- **'वापीकूपतडागादेर्जीर्णोद्धारे महाफलम्।'**[10] इति।

## सन्दर्भा:


1 रामचरितमानस
2 श्रीमद्भगवद्गीता, तृतीयोध्याय: श्लो, 14
3 जलविज्ञान, अध्याय 14, पृ.सं. 307
4 बृहत्संहिता दकार्गलाध्याय: श्लो. सं. 1-2
5 जलविज्ञान, अध्याय: 14, पृ.सं. 308
6 बृहत्संहिता, प्रसादलक्षणाध्याय:, श्लो. सं. 3
7 जलविज्ञान, अध्याय: 14, पृ.सं. 310
8 बृहत्संहिता, दकार्गलाध्याय:, श्लो. सं. 121
9 बृहत्संहिता, दकार्गलाध्याय: , श्लो. सं. 119
10 अग्निपुराण 31/6



*शोधच्छात्र ( ज्योतिष विभाग )*
*केन्द्रीय विश्वविद्यालय वेदव्यासपरिसर: बलाहर:*

ISSN 2456-3420

# ज्योतिषशास्त्रे वृष्टिविज्ञानम्

गिरीशकुमार झा

त्रिस्कन्धात्मके ज्योतिषशास्त्रे न केवलं ग्रहाणां ग्रहगत्यादीनामेव विवेचनं विद्यते अपितु प्रतिस्कन्धेषु विभिन्नविषयाः सुष्ठु प्रतिपादिताः सन्ति। सृष्ट्यादितः प्रलयान्तं यावत्? प्रायशः सर्वेषां घटनाचक्राणां ब्रह्माण्डीयपरिवर्तनानाञ्च समुल्लेखो ज्योतिषशास्त्रे प्रतिष्ठापितमस्ति। तत्र संहिता स्कन्धेषु ब्रह्माण्डे जायमानानां परिवर्तनानाञ्च तेषां परिपाकानाञ्च सम्यक? समीक्षणं दृश्यते। वृहत्संहितायां वराहमिहिराचार्येणोक्तम्?– 'यत्रैते संहिता पदार्थाः '[1]– दिनकरादीनां ग्रहाणां चारास्तेषु च तेषां प्रकृति–विकृति–प्रमाण–वर्ण–किरण–द्युति–संस्थानास्तमनोदय–मार्गान्तर वक्रानुवक्रर्क्षग्रहसमागमचारादिभिः फलानि नक्षत्र कूर्म विभागेन देशेष्वगस्त्यचारः सप्तर्षिचारः। ग्रहभक्त्यो नक्षत्रव्यूह ग्रहश्रृङ्गारक–ग्रहयुद्धग्रहसमागम ग्रहवर्षफलगर्भलक्षण रोहिणीस्वात्याषाढी योगाः सद्योवर्षकुसुमलता परिधिपरिवेदाषयः।

यस्मादुल्कापादीनिशिघ्रमपगच्छन्तीति। तस्याश्चाकारवर्ण–स्नेहप्रमाणादि ग्रहर्थोपधातादिभिः फलानि भवन्ति।

एतेषां विशद विषमयूथानां समावेषः संहितासु विद्यते। तेषु रोहिणी स्वात्याषाढीयोगाः सद्योवर्ष कुसुमलता परिधि परिवेषादीनां सम्बन्धः वृष्टिविज्ञानेन सहैव वर्तते। तत्र वृष्टेः कारणं वृष्टिकालः तस्य परिणामश्चेत्यादयो विषयाः सम्यक् प्रतिपादिताः। येषामुल्लेखो संक्षेपेणाग्रे करिष्ये।

भारतवर्षः आरम्भादेव कृषिमूलकः। अतः ऋषयो वेदपारगाः कृषि कर्मणि वृष्टेः महत्त्वं विज्ञाय सततं वृष्टि ज्ञानाय सततं संचेष्टा आसन्। महर्षिणा पाराशरेणोक्तम्–

**वृष्टिमूला कृषिः सर्वा वृष्टिमूलं च जीवनम्।**
**तस्मादादौ प्रयत्नेन वृष्टिज्ञानं समाचरेत्॥** [2]

अस्माकं ज्योतिषशास्त्रे वृष्टिज्ञानाय ग्रहचारा आकाशलक्षणानि वायोः स्वरुपं भूमेः स्वरुपञ्चैते चत्वारः आधाराः परिकल्पिताः विद्यन्ते। येषां प्रभावेण मेघेषु जलाधानं भवति। एतेषां समेषां विवेचनं समासेनात्र मया विचार्यते।

**ग्रहचाराः-**

नक्षत्रेषु ग्रहाणां चारवशात् ग्रहयुतिवशाच्चापि वृष्टिज्ञानं भवति। यतो हि सर्वे ग्रहाः सूर्यरश्मिभिः प्रदीपिता भवन्ति। सूर्यस्य सुषुम्नादयो सप्तरश्मयः भवन्ति। एषु एकैकरश्मिरेकैकं ग्रहं पुष्णाति। प्रत्येकासु रश्मिषु– (1) वृष्टिसर्जना (2) हिमसर्जना (3) धर्मसर्जना तिस्रो नाड्यो भवन्ति। वृष्टिसर्जनानाडीषु चतुःशतं, हिमसर्जनानाडीषु शतत्रयम्, धर्मसर्जना नाडीषु त्रिशशतम्? सम्भूय प्रतिरश्मिषु सहस्त्ररश्मयः भवन्ति।[3] अस्मासु वृष्टिसर्जनानाड्यः स्वात् स्वाद् ग्रहात् परावर्त्य भूमिस्थानस्थावराज् जंगमान् वायुमण्डलस्थानमेघाश्च प्राभावयन्ति। तेषामुल्लेखः संहिताग्रन्थेषु दरीदृश्यते। यथा–

**ऋक्षप्रवेशे यदि भास्करे च चन्द्रे त्रिकोणे यदि केन्द्रगेवा।**
**जलालयस्थो भृगुजेक्षितौ युतौ सम्पूर्णमेघा जलदा भवन्ति।** [4]

एवमनेके योगाः सन्ति येषामाधारेण वृष्टेरनावृष्टेः पूर्वज्ञानं भवितुमर्हति। अपरा प्रक्रिया चैवम् सप्तविंशति नक्षत्रेषु चतुर्दशनक्षत्राणि चन्द्रस्य त्रयोदशनक्षत्राणि च सूर्यस्य भवन्ति।[5] यदा सूर्यश्चन्द्रश्चोभौ चन्द्रनक्षत्रे तदा वृष्टेरभावः। यदि चैकः सूर्यनक्षत्रेऽपरश्चन्द्रनक्षत्रे तदा सुवृष्टिः भवति। यथा–

**चन्द्रे चन्द्रे चरेद् वायु सूर्ये सूर्ये न वर्षति।**
**चन्द्रसूर्यसमायोगस्तदा वर्षति मेघराट्॥** [6]

एवमेव सूर्यादि ग्रहमण्डलेषु वर्णव्यत्यासवशादपि वृष्टेरनावृष्टेः संकेतो मिलति। यथोक्तम्–

**'वर्षास्वसितः सूर्यः करोत्यनावृष्टिम्।'**

एवं बहूनि प्रामाणानि सन्ति येषामाधारेण ग्रहचारवशात् ग्रहयुतिवशाच्च वृष्टेरनावृष्टेः आकलनं कर्त्तुं शक्यते।

**आकाशलक्षणम्-**

आकाशलक्षणस्य विशदविवेचनं वृहत्संहितायां प्राप्यते। तत्रोक्तं यत्–

आकाशे यदा रजोवृष्टिर्धूमोदिग्दाहः गन्धर्वनगरं परिवेशादयश्च दृश्यन्ते तदा शुभकरो न भवति वृष्ट्यर्थम्। एवमेव धूमकेतूनां दर्शनमपि उत्पातसूचकं भवति। अतः सुवृष्ट्यर्थं निर्मलाकाशं उत्पातादि दोषरहितमपेक्षते। आकाशस्थे राशिचक्रस्य अष्टमभागे नवमभागे च सूर्यस्य स्थितिर्भवति अर्थात् वृश्चिकराशिस्थो धनुराशिस्थो वा रविः मेघानां कृतेऽनुकूलं कालं सृजति। यादृशमाकाशं भवति तादृशमेव मेघष्वाधानं भवति।

**वायोः स्वरुपम्-**

वृष्टौ यथा मेघानामावश्यकता भवति तथैव वायोरपि। अतः वायोर्विवेचनम् अपि नितान्तमावश्यकम्। वायुस्त्रिधा वर्तते। यथा–

**वातस्तु त्रिविधः प्रोक्तोवापकः स्थापकोऽपरः।**
**तृतोयो ज्ञापको वृष्टेः स्थानाङ्गे मध्यसंङ्गहात्॥** [7]

अत्र पावकाख्यो वायुर्दिग्भ्यः उद्गच्छति मेघांश्चोत्पादयति। स्थापकाख्यो वायुमेघानितस्ततः भ्रामयति वृष्ट्यर्थञ्च प्रेरयति। ज्ञापको

वायुः तिथिभिः सह सम्बन्धितो भवति। एतेन सुस्पष्टमिदं यत् मेघानां सञ्चरणे प्रवर्षणे च वायोर्महद् योगदानं वर्तते।

**भूमेः स्वरुपम्-**

वायोरिव भूमेरपि वृष्टौ महद्योगदानमस्ति। भूमेः वातावरणं स्वरुपञ्चावलोक्य अस्यापि त्रिधा विभाजनं कृतमवलोक्यते। यथा-

**अनूपो जाङ्गलो मिश्रस्त्रिधादेशोबुधैर्मतः।**
**तत्त्वत्स्वभावं विज्ञाय जलवृष्टि निवेदयेत्॥**[8]

**तत्रानूपस्य लक्षणम्-**

**नदीपल्वलशैलाढ्यः मृदुवातातपान्वितः।**
**अनेक-वन-सस्याढ्यः सोऽनूपो देशउच्यते॥**[9]

अर्थात् यत्र प्रचुरजलाशयाः पर्वताः विविधैर्वृक्षैः युतानि वनानि सस्यराशयश्च भवन्ति तथा च तत्र मृदुवातः तापः धर्मो वा भवति सोऽनूपः कथ्यते।

**जाङ्गलः-**

**स्वल्पोदकतृणो यस्तु प्रवातः प्रचुरातपः।**
**स ज्ञेयो जांगलो देशो बहुधान्यादि संयुतः॥**[10]

अर्थात् यत् स्वल्पजलाशयाः स्वल्पतृणादयश्च भवन्ति तथा प्रबलवायोः सञ्चारः, आतपश्च प्रकर्षेण भवति स देशः जाङ्गलसंज्ञकः।

**मिश्रः-**

**संसृष्टलक्षणो यस्तु देशः साधारणो मतः।**
**समा साधारणे वृष्टिः यस्माच्छीतवर्षोष्णमारुतः॥**[11]

अर्थात् यत्र मिश्रितानि लक्षणानि भवन्ति तत्र समत्वं जायते।

एतेषां चतुर्णामाधाराणां सम्यक् परीक्षणं कृत्वा मेघगर्भाधानस्य सावधानतया परीक्षणं कर्त्तव्यम्। यतो हि यादृशमाधानं भवति तथा च मेघगर्भस्य यादृशी पुष्टिर्भवति तादृशी एव वृष्टिर्भवति। मेघानां गर्भाधानकालः मार्गशीर्षमासः पौषश्च वर्तते। विषयेऽस्मिन् वृहत्संहितायामेवं प्रतिपादितं वर्तते-

**ह्लादिमृदूदकशिवशक्रभवोमारुतो वियद् विमलम्।**
**स्निग्धसितवहुलपरिवेषपरिवृतौ हिममयूखार्कौ॥**

अर्थात् ह्लादिनी मन्दवायु ईशानकोणतः प्राचीतो वा यदा वहति आकाशं निर्मलं भवति तथा च स्निग्धः परिवेषः सूर्यचन्द्रमसोः मण्डलं परितो भवति तदा मेघेषु आधानं भवति।

विषयेऽस्मिन् पाराशरो वक्ति-

**पोषे मूल भरण्यन्तं चन्द्रचारेण गर्भति।**
**आर्द्रादितो विशाखान्तं सूर्यचारेण वर्षति॥**[12]

पौषेमूलनक्षत्रे चन्द्रः प्रायशः अमायां तस्य आसन्नतिथौ वा गच्छति तथा च आर्द्रानक्षत्रे सूर्यः प्रायशः आषाढमासे गच्छति।

यदि च आधान प्रवर्षणकालयोर्मध्ये कश्चन उत्पातो भवति गर्भपातो वा भवति तदा नियतकाले वृष्टिरभावे भवितुमर्हति।

उक्तञ्च कादम्बिन्याम्-

**पौष शुक्लादितो गर्भो यदा दशतिथिष्वपि।**
**चातुर्मास्यं सुवृष्टिः स्यात् गर्भपातौ मर्घो न चेत्॥**

अत्रेदमपि विचारणीयं विद्यते यत् सर्वेषु मेघेषु आधानं न भवति। सर्वे मेघाः प्रवर्षणयोग्याः न भवन्ति। पुराणेषु अनेकविधायां मेघानां नामानि लक्षणानि च प्रदर्शितानि सन्ति। तेषां संक्षेपेणात्रोल्लेखः क्रियते। मेघाः चतुर्धा भवन्ति - (1) संवर्त्तकः (2) आवर्तकः (3) पुष्करः (4) द्रोणः।

एषु संवर्त्तको बहूदको भवति, आवर्तकस्तु निर्जलः, पुष्करः अत्यल्प जलदः, द्रोणः संयत जलदो भवति। अयमेव कृषिकर्मोपयुक्तः भवति। यथा-

**आवर्त्ती निर्जलो मेघः संवर्तश्च बहूदकः।**
**पुष्करो दुष्करजलो द्रोणो सस्यप्रपूरकः॥**[13]

एवं वृष्टिविषयाधिकृत्य ज्योतिषशास्त्रे बहवः विचाराः दृश्यन्ते। बहवश्च ग्रन्थाः अवलोक्यन्ते। संहितासु पुराणेषु च बहूनामेषां समुल्लेखो दृश्यते। अद्यापि वृष्टिविषयकस्य भारतीयज्ञानस्योपयोगिता वर्तते।

**सन्दर्भसूचीः**


1. बृहत्संहिता 1.2.5 श्लोकात्परं गद्यांशः
2. कृषिपाराशरः- वृष्टिखण्डे- श्लोक- 1
3. कूर्मपुराण- 1.41.11-12
4. आर्ष वर्षा वायु विज्ञानम् पृ.- 218
5. वृष्टिप्रबोधः- पृ.- 1.2
6. वृष्टिप्रबोधः- पृ.- 1.2
7. वृष्टिप्रबोधः- पृ.- 41, श्लोक- 194
8. वृष्टिप्रबोधः- पृ.- 6, श्लोक- 22
9. वृष्टिप्रबोधः- पृ.- 6, श्लोक- 23
10. वृष्टिप्रबोधः- पृ.- 6, श्लोक- 24
11. वृष्टिप्रबोधः- पृ.- 6.7
12. वायुवृष्टिविज्ञानम्- पृ.- 18
13. शब्दकल्पद्रुम- भाग- 3, पृ.- 776



*शोधार्थी, ज्योतिष विभाग*
*का. सिं. द. संस्कृत विश्ववि., दरभंगा*

ISSN 2456-3420

# ग्रहाणाम् प्राग्गतित्वं

विनायक शर्मा

स्वस्वकक्षास्ववस्थिताः ऊर्ध्व-ऊर्ध्व क्रमेण चन्द्रादयः ग्रहाः प्रवहानिलप्रभावदिकस्मिन्नवाहोरात्रे भगण भोगं प्रकुर्वन्तीति प्रत्यक्षावलोकनादेव सिद्धम्। वस्तुतः सिद्धान्ते वर्णितसप्तवास्कन्धेषु यद्वितीयं प्रवहाख्यं तस्य तु प्रत्यगगितः , एवञ्च भूमितः द्वादशयोजनात् उर्ध्वं स्थितिः। तद्यथा गोलाध्याये-

**भूमेर्बहिर्द्वादशयोजनानि भुवायुरत्राम्बुदविद्युदाद्यम्।**

**तदूर्ध्वगो यः प्रवहः स नित्यं प्रत्यगगितस्तस्यतुमद्य संस्था।।**

**नक्षत्रकक्षाखचरैः समेतो यस्मादतत्सतेन् समाहतोऽयम्।**

**भपञ्जरः खेचर चक्रयुक्तो भ्रमत्यजस्त्रं प्रवहानिलेन।।**[1]

स प्रवहाख्य वायुः स्वातिवेगात् नक्षत्रैः सह ग्रहान् पश्चिम दिशि तथाभि प्रेरयति यथा एकेनाहोरात्रेण नक्षत्रकक्षा सह ग्रहाः भमण्डलस्यास्य भ्रमणं प्रकुर्वन्ति।

ग्रहाणां गतिकारणमितिसन्दर्भे सूर्यसिद्धान्ते इत्थं वर्णितं उपलभ्यते-

**पश्चाद् व्रजन्तोऽतिजवान्नक्षत्रैः सततं ग्रहाः।**

**जीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः।।**

**प्राग्गतित्वमतस्तेषां भगणैः प्रत्यहं गतिः।**

**परिणाहवशाद् भिन्ना तद्वशाद् भानि भुञ्जते।।** [2]

अर्थात् चन्द्रादयः ग्रहः भचक्रैः सह प्रवहानिलजातिवेगात् पश्चिमदिशि गच्छन्नपि स्वस्व कक्षायां तुल्ययोजनात्मकमानैः पूर्वदिशि लम्बायमानाः जायन्ते। अर्थात् नक्षत्राणामग्रे गमनात् तैः पराजिताः इव भान्ति; यथा ह्येकस्मिन् दिने अश्विन्यादाववस्थिताः चन्द्रादयः ग्रहावलोकिताः एवञ्चापरस्मिन् दिने अश्विन्यादि बिन्दुसार्धं चन्द्रादिग्रहाणामुदयः न जातः, अर्थात् अश्विन्यादिबिन्दूदयान्नतरं ग्रहोदयः जातः। अतोक्तं -

**जीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगाः।**

**प्राग्गतित्वमतस्तेषा............................।।** इति [3]

एतावता न क्षरतीति नक्षत्रमितिव्युत्पत्या नक्षत्रेषुगतेरभावत्वात् ग्रहेष्वेव प्रग्गतित्वमिति सिद्धयति। वस्तुतः यथा स्वातिवेगात् वामगत्या गच्छन् कुलालचक्रस्थिताः कीटानां दक्षिणाभिमुखं गतेः ज्ञानं स्थुलदृष्टया न सम्भवति, तद्वदेव ग्रहाणां स्वभाविकी पूर्वाभिमुखं गतेर्ज्ञानं प्रवहानिलापेक्षया अत्यल्पत्वात् स्थूलदृष्टया न प्रतिभाति तद्यथा गोलाध्याये-

**यान्तोभचक्रे लघुपूर्वगत्या खेटास्तुत्स्यापरशीघ्रगत्या।**

**कुलालचकभ्रमिवामगत्या यान्तो न किटा इव भान्ति यान्तः।।** इति [4]

तथा च नक्षत्रकक्षादारभ्य अधोऽधः शनि, गुरु, कुज, सूर्य, शुक्र, बुध, चन्द्र,पृथ्वी, एतेषां स्थितीः विद्यन्ते, तद्यथा सूर्यसिद्धान्ते-

**ब्रह्माण्डमध्ये परिधिव्योम कक्षा भिधीयते।**

**तन्मध्ये भ्रमणं भानांमधोऽधः क्रमशस्तथा।।**

**मन्दामरेज्यभूपुत्र-सूर्य शक्रेन्दुजेन्दवः।**

**परिभ्रामन्त्यधोऽधस्थाः सिद्धाः विद्याधराः घनाः।।**[5]

वस्तुतः अश्विन्यादि सप्तविंशति नक्षत्राणां स्तिथिः भचक्रे वर्तन्ते यः सर्वोऽपरिस्थःवर्तन्ते एवञ्च तदारभ्य शन्यादि ग्रहाणां कक्षा सन्ति। तत्र चन्द्रविमण्डलस्यापेक्षया भचक्रं अतिदूरः एवञ्च चन्द्रः स्वक्षायामेव क्रामति, अतः अश्विन्यादौ स्थितः चन्द्रः इत्युक्ते सति चन्द्रसम्बंधि यः अश्विन्यादि तस्य ग्रहणं कथं कुत्र च कर्तव्यं, यतो हि विमण्डले अश्विन्यादि स्थितिः न दृश्यते। अत्रेवमपि जिज्ञासा समुद्गच्छति यत् यदि सुर्येतर कोऽपि ग्रहः कर्क्यादौ अस्ति तदा तस्य स्वकीय कक्षायां मेषादिराशेरभावत्वात् कर्क्यादि इति स्थान विशेषस्य कल्पना कथं भवति। तन्निवारणाय गोलपरिभाषायां उच्यते-

**ग्रहबिम्ब कदम्बर्ष गतं वृतं भमण्डले।**

**यत्र विन्दौ युतं तत्र तद् ग्रहस्थानमुच्यते।।**[6]

अर्थात् ग्रहगत कदम्ब प्रोतवृतः क्रान्तिवृते यत्र स्पृशति तत्रैव ग्रहस्थानमिति प्रकल्प्यं। यतोहि मेषादि द्वादश राशीनां कल्पना क्रान्तिवृते एव सन्ति, न तु सूर्येतर ग्रहाकक्षायां। तद्वदेव सृष्ट्यादौ ब्रह्मणा अश्विन्यादावेव सर्वेऽपि ग्रहाः निवेशिताः इति वयं अवगच्छामः। तत्रापि अश्विन्यादिः भचक्रे एव अस्ति न तु ग्रह कक्षायां, अतः भूगर्भात् सूत्रमेकं बद्धवा भचक्रे अश्विन्यादौ किलनिर्बद्धम्, तत् सूत्रं ग्रहकक्षायां यत्र स्पृशति तत्रैव ग्रहाः आसीदिति प्रकल्प्यं। एवमेव भरण्यादौ चन्द्रः अस्तीति स्थिते भूगर्भात् सूत्रमेकं बद्धवा भचक्रे भरण्यादौ निर्बद्धं तदा तत् सूत्रं चन्द्रकक्षायां यत्र प्रविशति तत्रैव भरण्यादि इति नक्षत्रस्य कल्पना कर्तव्यम्। अतः भरण्यां ग्रहाः सन्ति इत्युक्ते ग्रहक्षायामेव भरणी इत्यस्य कल्पना भवति न तु भचक्रे। तथा च प्रवहवायुसत्वर गतिवशात् सततं पश्चिम दिशि गच्छन्नपिस्वस्वक्षासु तुल्यमेव योजनात्मक मानैः पूर्व दिशि लम्बायमानाः जायन्ते अतस्तेषां प्राग्गतिः। तत्र सूर्यसिद्धान्ते-

**वक्रातिवक्रा कुटिला मन्दा मन्दतरा समा।**

**तथा शीघ्रतरा शीघ्रा ग्रहाणामष्टधा गतिः।।**[7]

इति वचनाद् ग्रहाणाम्ष्टधागतयः भवन्तीति ज्ञायते। तत्र यदि ग्रहाः वक्रिणः जायन्ते अर्थात् स्वस्वभाविकी गतिं विहाय पश्चिमाभिमुखं जायन्ते तदा स्वक्षितिजे तेषामुदयः नक्षत्रानामपेक्षया प्रागैव भवेदिति

कृत्वा 'जीयमानास्तु लम्बन्ते तुल्यमेव स्वमार्गगा:'।[8] यथा शब्दशास्त्रे एकं सूत्रम् अपर सूत्रे अपवादत्वेन तिष्ठति तद्वदेव अत्रापि यदा ग्रहा: वक्रत्वं प्राप्नुवन्ति तदा सा गति प्राग्गतेरपवादत्वेन तिष्ठति। अर्थात् यदा ग्रहा: वक्रिण: दृश्यन्ते तदा ते स्वक्षितिजे नक्षत्राणामपेक्षया प्रागैव समुद्गच्छन्ति ।ननु ग्रहभगणानां तुल्यत्वाभावात् प्रतिदिनं ग्रहगतिर्भिन्नेति प्राप्यते, तद्यथा चन्द्रस्य दैनिकगति : नवत्युत्तरसप्तशतं कला, पञ्चत्रिंशत् विकलात्मिका एवञ्च शनेर्द्वेकले भवति। पूर्वं तुल्यमेव स्वस्वकक्षायां लम्बायमाना: जायन्ते इति प्रतिपादितं, अधुना गतौ भिन्नत्वं दृश्यते, अत्र सर्वेषां ग्रहाणां योजनात्मक राश्यंशादि गतयश्च पृथक भवत्येव, यतो हि सर्वे ग्रहा: कल्पे खकक्षा योजनमेव भ्रमन्ति, अत: यदि कल्प कुदिनैर्खकक्षा योजनं तदैकेन कुदिनेन किमित्यनुपातेन् योजनात्मिका गतिस्तुल्यमेव भवति। '**अतोक्त्तं तुल्यमेव स्वमार्गगा:**'[9] इति। पुनश्च गतिषु कथं भिन्नत्वंमित्याकांक्षायां– 'भगणै: प्रत्यहं गति: परिणाहवशाद् भिन्ना तद्वशाद् भानिभुञ्जत' [10] इत्युपपादितम्।

वस्तुत: सर्वेषां ग्रहाणां कक्षाश्चक्रलिप्ताभिरेवाङ्किता: सन्ति, एवञ्च चन्द्रात् सकाशात् ऊध्वोर्ध्वस्था बुधशुक्रादिग्रहाणां कक्षा परिधि: महत्य: भवन्ति। अर्थात् चन्द्रस्यापेक्षया बुधस्य कक्षा महति तदपेक्षया शुक्रस्य कक्षा महति एवं क्रमेण शने: सर्वान्ते स्थित्वात् तस्य कक्षा अति महति भवति। अत: लघुनि वृत्ते लघ्व: लिप्तादिमानानि महति वृत्ते महत्यश्च। अथ च ग्रहकक्षा योजनैर्यादि भगणकला: एकविंशति सहस्राधिक षट्शतं (21600)

तदा गति योजनै:(ख.क.×1)

क.कु किमित्यनुपातेन सर्वेषां ग्रहाणां गतियोजनेषु तुल्येष्वपि कक्षानमतुल्यत्वात् अनुपातलब्धा गतिकला: भिन्ना: भिन्ना: स्यादेव। अत: चन्द्रकक्षाया: एका कला षटभि: सहस्रैरीकसप्तत्योनैर्भवति, अतोक्त्तं श्री मद्भि: भास्कराचार्यै: –

**समागतिस्तु योजनैर्नभस्सदां सदा भवेत्।**

**कलादिकल्पनावशाद् मृदुदभुता च सा स्मृता।।**[11]

अर्थात् योजनात्मकमानै: ग्रहाणां गतय: समा: भवन्ति परञ्च कलादिकल्पनावशाद् अधिकाल्पं भविष्यत्येव कक्षानामतुल्यत्वादिति।।

## सन्दर्भा:


1 सिद्धान्तशिरोमणी गो.अ. श्लो- 2-3

2 सूर्यसिद्धान्त मध्यमाधिकार श्लो-25

3 सूर्यसिद्धान्त मध्यमाधिकार श्लो-26

4 सि. शि. गोला. मध्यगति वासना श्लो-4

5 सूर्यसिद्धान्त भूगोलाध्याय श्लो-30-31

6 गोलपरिभाषा

7 सूर्यसिद्धान्त स्पष्टाधिकार श्लो-12

8 सूर्यसिद्धान्त मध्यमाधिकार श्लो- 25

9 सूर्यसिद्धान्त मध्यमाधिकार श्लो-25

10 सूर्यसिद्धान्त मध्यमाधिकार श्लो-26

11 सि. शि. ग्रहगणित श्लो- 26



*फलितज्यौतिषाचार्य: (NET)*

*केन्द्रीयसंस्कृतविश्वविद्यालय:*

*गंगानाथझापरिसरप्रयागराज*

ISSN 2456-3420

# ज्योतिषशास्त्रस्य पर्यावरणविज्ञानस्य च अन्तःसम्बन्धविमर्शः

**वैजयन्ती माला**

**शोधसारः-**

कालात् प्रसूतमिदं विश्वं काले एव परिवर्द्धितं परिचालितञ्च। कालं विहाय न कोऽपि जीवः जगति स्थातुं शक्नोति[1]। कालस्यास्य विधानशास्त्ररूपेणसुप्रसिद्धमस्ति ज्योतिषशास्त्रम्। ज्योतिषशास्त्रमिदं सिद्धान्त-संहिता-होराख्येषु त्रिषु स्कन्धेषु विभक्तं वर्तते।[2] एतेषां स्कन्धानां समुचिताध्ययनेनइदं ज्ञायते यत् आधुनिककालस्य वैज्ञानिकाः यान् विषयान् आधुनिकविज्ञाननाम्ना प्रतिपादयन्ति तेषां अधिकांश-वैज्ञानिकविषयाणांमूलसूत्रं ज्योतिषशास्त्रे समुपलभ्यते। विज्ञानस्य नानाविधाः शाखाः ज्योतिषशास्त्रात् निःसृताः वर्तन्ते। तद्यथा - गणितशास्त्रम्-Mathematics, त्रिकोणमितिः-Geometry, खगोलशास्त्रम्-Astronomy, वास्तुशास्त्रम्-Architecture, भूगर्भविज्ञानम्-Geography, भौतिकविज्ञानम्-Physics, ऋतुविज्ञानम्-Metrology Science, पर्यावरणविज्ञानम्-Environment Science, हस्तरेखाविज्ञानञ्च-Palmistry Science। पूर्वोक्तानां समेषामपि विषयाणाम् आधारः ज्योतिषशास्त्रमेव अतः एतेषु प्रत्येकमपि विषयस्य व्यवस्थितम् अध्ययनं ज्योतिषशास्त्रेण सहैव भवितुमर्हति।

समग्रब्रह्माण्डस्य ग्रहनक्षत्रादीनाम् अध्ययनपरकं शास्त्रमिदं ज्योतिषम्। अतः पृथिवीग्रहस्य पर्यावरणादिविषयेऽपि नानाविधाः विषयाः अत्र पदे पदे प्रतिपादिताः दृश्यन्ते। इदं शोधपत्रं पर्यावरणविज्ञानस्य ज्योतिषशास्त्रस्य च अन्तःसम्बन्धमेव निरूपयति।

**शोधपत्रम् -**

प्रकृतिः समेषां प्राणीनां संरक्षणाय यतते। इयं सर्वान् पुष्णाति विविधैः सुखसाधनैश्च तर्पयति। पृथिवी, जलं, तेजः, वायुः, आकाशश्च अस्याः प्रमुखानि तत्त्वानि सन्ति। एतान्येव मिलित्वा पृथक्तया वा अस्माकं पर्यावरणं रचयन्ति। यथोक्तं -

आव्रियते परितः समन्तात् लोकोऽनेनेति पर्यावरणम्।

एवमेवपरितः आवरणं पर्यावरणम् इत्यपि उच्यते। अस्यायमर्थः यत् अस्मान् परितः यत्किमपि विद्यमानं वर्तते, यः अस्मान् प्रत्यक्षाप्रत्यक्षरूपेण प्रभावयति तदेव पर्यावरणम्। यथा - जलम्, स्थलम्, वायुः, पर्वतादयश्च।

पर्यावरणघटकाः - सौरमण्डले पृथिवी विशिष्टं स्थानं भजते। सौरमण्डले पृथिवी एव एतादृशः ग्रहः वर्तते यत्र मानवजीवनं, वनस्पतिजीवनं, पशुपक्षिणां जीवनञ्च विकसितम्। अत्रैव मानवसभ्यतायाः संस्कृतेश्च प्रगतिः अभवत्। आधुनिकवैज्ञानिकक्षेत्रे भूमण्डलनाम्ना प्रसिद्धा पृथ्वी मण्डलचतुष्टयेन आवृता वर्तते। यथा- स्थलमण्डलम्, जलमण्डलम्, वायुमण्डलम् जैवमण्डलञ्च[3]।

स्थलमण्डलम्-पृथिव्याः यः भागः मृदा-शैल-पर्वतादिभिः घनपदार्थैः निर्मितं तदेव स्थलमण्डलं वर्तते। स्थलमण्डले भूभागः समुद्रतलञ्च उभावपि परिगण्येते। स्थलमण्डलं सम्पूर्णपृथ्व्याः 3/10 भागः वर्तते। शेषं 7/10 भागःजलमण्डं वर्तते।

जलमण्डलम्-स्थलमण्डलस्य अधस्थभागः जलमण्डलं वर्तते। अर्थात् यः भागः जलेन युक्तः वर्तते। यथा-सरोवर-जलाशय-समुद्र-महासागरादयः।97.3ञ जलं समुद्रेषु महासागरेषु च वर्तते। मात्र 2.7ञ जलमेव हिमधरेषु, हिमशैलेषु, शुद्धजलस्य सरोवरेषु, नदीषु तथा भूमिगतजलरूपेण विद्यमानं वर्तते।

वायुमण्डलम् - स्थलमण्डलजलमण्डलौ परितः नानावाय्वीय-पदार्थानां नाइट्रोजन-आक्सीजन-कार्बनडाइआक्साइडादीनां, वायुकणानां, जलकणानां, मृत्तिकाकणानाम् अन्येषां च बहुविधपदार्थनां मिश्रणं वर्तते। एतेषां पदार्थानां मिश्रणेन निर्मितम् आवरणमेव वायुमण्डलनाम्ना ज्ञायते। वायुमण्डलस्य ओजोनः इत्याख्यः स्तरः (ह्व3)सूर्यात् आगम्यमानाःअत्यधिकहानिकारकपराबैंगनीरश्मीः शोषयति। येन प्राणिनां रक्षा भवति।

जैवमण्डलम् - जैवमण्डलं जीवनस्य आधारः वर्तते। अस्मिन् जैविक-अजैविकावयवानां सन्तुलनं भवति। अर्थात् जीवनाचरणप्रणाल्यां वायु-जल-मृदा-मानव-पशुपक्षिणः, वनस्पतयः जीवाण्वादयश्चअदृश्यरूपेण परस्परं सम्बद्धाः वर्तन्ते।

एतेन मण्डलचतुष्टयेन निर्मितं परिष्कृतं प्रदूषणरहितं च पर्यावरणमस्मभ्यं सांसारिकं जीवनसुखं, सद्विचारं, सत्सङ्कल्पं माङ्गलिकसामग्रीञ्च प्रददाति। अजातः शिशुः मातृगर्भे यथा सुरक्षितः तिष्ठति तथैव मानवः पर्यावरणकुक्षौ सुरक्षितः भवति। परन्तु प्राकृतिककोपैः आतङ्कितो जनः किं कर्तुं प्रभवति,जलप्लावनैः, अग्निभयैः, भूकम्पैः, वात्याचक्रैः, उल्कापातादिभिश्च सन्तप्तस्य मानवस्य क्व मङ्गलम्? ज्योतिषशास्त्रे एतेषां प्राकृतिकविषयाणां विस्तृतं विवेचनं लभ्यते।

ज्योतिषशास्त्रे संहितास्कन्धस्य अध्ययनेन स्पष्टं भवति यत् तत्र प्रतिपादिताः पर्यावरणसम्बन्धि-विषयाः पञ्चसु विभागेषु विभक्तुं शक्यन्ते। यथा -वायुमण्डलीय-भौमिक-जलीय-जैविक-सामाजिकाश्च। एतेषु विषयेषु केषाञ्चितविषयाणामेव सुविस्तृत-विवेचनम् अत्र प्रस्तूयते।

1. वायुमण्डलीयविषयाणां ज्योतिषशास्त्रीयपरिशीलनम्-

1.1. अनावर्षणम्- वृष्ट्याभावः वृष्टिहानिर्वा अनावर्षणम् अनावृष्टिर्वा कथ्यते। यदा प्राकृतिकपारिस्थितिकतन्त्रे जलाभावात्

कृष्याद्युत्पादने न्यूनता भवेत् तथा परिणामत: पारिस्थितिकतन्त्रं क्षतिग्रस्तं भवति तदेव अनावर्षणं कथ्यते। चित्रम् –

वनमालायाम् अनावर्षणविषये इदं निरूप्यते यत् आषाढशुक्लपूर्णिमायां सूर्योदयास्ते अप्रतिहतवेगेन वायु: चलतितदा तद्वर्षे सर्वत्र वृष्टेरभाव: जायते इति[4]। पुन: आचार्यवराहमिहिरेण बृहत्संहितायामप्युक्तं यत् यदा गुरुशुक्रौ पश्चिमपूर्वयोर्दिशो: परस्परं सप्तमराशिगौ भवेतां तदा कालेऽस्मिन् जना: रोगै: भयशोकादिभिश्च पीडिता: भवन्ति[5]।

1.2 अतिवर्षणम्– यदा अतिवृष्टिकारणात् जनधनहानि: कृष्यादिविनाश: वा परिलक्ष्यते तदाअतिवर्षणम्इति कथ्यते। चित्रम् –

भद्रबाहुसंहितायाम् अतिवर्षणविषये प्रतिपादितं वर्तते यत् यदा सार्धसप्ताहोरात्रं यावद् नियमितरूपेण यस्यां कस्यामपि दिशि वायु: वहेत् तदा महाभयमतिवृष्टिश्च भवति[6]। बृहत्संहितायामप्युक्तं यत् ये मेघा: गर्भकाले प्रचण्डैर्दिवाकरकिरणैरभितापिता:स्वल्पपवनै: सम्पन्नाश्चभवन्ति तदा तेप्रसवकाले क्रुद्धा इव धारारूपेण वर्षन्ति[7]।

1.3. चक्रवात:/प्रचण्डवातश्च–यदाप्रचण्डवेगेन वायो: बहिर्भागात् केन्द्रं प्रति उर्ध्वाधोरूपेण भ्रमणं जायेत तदा स: वायु: चक्रवात: अथवा प्रचण्डवातनाम्ना ज्ञायते। एतस्य केन्द्रे न्यूनवायुभार: तथा परित: उच्चवायुभार: भवति। तथा वायो: क्षितिजलम्बवत् उभयविधा गति: तीव्रा भवति, यस्मात् ताडितझञ्झया सह अतिवृष्टि: तुषारखण्डवृष्टिश्च भवति। एतस्य प्रतिघण्टात्मकगति: –90–125 कि.मि.मिता दृष्टा वर्तते। चित्रम् –

वसिष्ठसंहितायां प्रचण्डवातविषये प्रतिपादितं वर्तते यत्यदा सूर्यचन्द्रयो: रश्मय: ग्रहगणै: सह मन्दा: भवन्ति, भुवि प्रचण्डवात: भवन्ति तदा भ्रमणशीलजना: क्षुभिता: भवन्ति। यदा शनि: मीनराशौ गच्छति तदा सम्पूर्णजगत् चक्राकृतिवत् भ्रमणशील: प्रतीयते8।

1.4. ताडितझञ्झा–ताडितझञ्झा भूमे: उपर्युत्तेजितवायुमण्डल–स्थिति: वर्तते। अस्मिन् झञ्झावाते वायो: प्रचण्डवेग: भवति।अतिवृष्टिर्हिमवृष्टिश्च भवति। चित्रम् –

भद्रबाहुसंहितायामुक्तं यत् कृष्णमेघयुक्तविद्युत् वायुयुक्तवृष्टिं करोति[9]। पुन: बृहत्संहितायां उक्तं यत् शुक्रादग्रे भौम: संचरेत् तदा अग्नि:, दुर्भिक्षम्, अवर्षणं, चोरभयं, शास्त्रसंग्रामाश्च भवन्ति तथा अग्निना विद्युता रजसा च उपतापयति[10]।

1.5. मेघस्फोट: – मेघस्फोट: वायुमण्डलस्य प्रलयकारी स्वरूपं वर्तते। अस्मिन् काले ध्वनियुक्तमेघा: सामान्यवर्षणापेक्ष्या दश–विंशतिगुणितं वर्षणं भवति। स्वत: एव महापूरकारणेन अस्मिन् काले महोत्पात: जायते। चित्रम् –

बृहत्संहितायामेतत्सम्बद्ध: योग: दृश्यते। तद्यथा – यदा बृहस्पति–बुध–भौम–शनैश्चरश्च शुक्रस्यअग्रपथानुवर्तिन: भवन्ति तदा मित्राणि मित्रतां न भजन्ते इति। उल्कापात: पर्वतानां शिखराणि विदारयति[11]।

**भौमिकपर्यावरणविषयाणांज्योतिषज्ञानम् –**

2.1. अग्निनगस्फोट: – पृथिव्या: आन्तरिकभागे एतादृशानि चक्राणि उपस्थितानि वर्तन्ते येन पृथिव्या: मध्यभागात् उष्णद्रव्यं वायु: (गैस) भस्मादितत्वानि बहि: धरातलं आयान्ति। वस्तुत: भूकेन्द्रादारभ्य पृथिवी विविधशकलखण्डवत् संरचिता वर्तते। भूमिस्तरेषु सर्वत: उपरि नाभिकुपिका भवति येन माध्यमेन पृथिव्या: आन्तरिकपदार्था: बहि: निर्गच्छति। निर्गता: इमे पदार्था: एव अग्निनगस्फोटनाम्ना प्रसिद्धम्। चित्रम् –

बृहत्संहिताग्रन्थे इदं निरूप्यते वराहमिहिरेण यत् यदा विनाग्निं यत्र धूमो दृश्यते दिनभागे धुलि: अन्धकारश्च दृश्यते तदा महद्भयम् उत्पद्यते[12]। आचार्यगर्गेणाप्युक्तम् –

**अनिशानि तमांसि स्युर्यदि वा पांशवो रज:।**
**धूमश्चानग्निना यत्र तत्र विन्द्यान्महद्भयम्॥**

2.2 दावाग्नि: – वनेषु प्रज्वलित: प्रचण्डाग्नि: दावाग्निनाम्ना ज्ञायते। दावाग्नि: मुख्यरूपेण तदा भवति यदा वनस्पति: मृत्तिका च अतिशुष्का भवति। सन्दर्भचित्रम् –

वसिष्ठसंहितायांप्रतिपादितमस्ति यत् यदापूर्वाभाद्रपद–उत्तराभाद्रपद–भरण्यादिषुबुध: सञ्चरति तदा प्रचण्डाग्नि: समग्रस्यापि दहनं करोति[13]।

2.3. भूकम्प: – भूम्या: कम्पनमेव भूकम्प:। पृथिव्याम् आन्तरिकक्रियाया: प्रभाव: यदा भूमे: उपरितनभागे भवति तदा तत्र विभिन्नक्रिया: भवन्ति। अनेन बलिष्ठप्रकम्पनेन येन बहुविध: नाश: जायते। सन्दर्भचित्रम् –

बृहत्संहितायां भूकम्पयोग: इत्थमुच्यते – बृहस्पतिना पराजिते बुधे महीकम्पनं भवति[14] इति। वसिष्ठसंहितायामुक्तं यत् यदा भौम: पूर्वफाल्गुन्यामुदेति, उत्तराषाढायां वक्री भूत्वा रोहिण्याम् अस्तं गच्छति तदा भूकम्प: जायते[15]।

**3. जलीयभौमोत्पातानां ज्ञानम्–**

3.2. सुनामी – समुद्रस्य प्रकम्पनेन जलोर्मिकानां तीव्रसञ्चार: एव वर्तमाने सुनामीनाम्ना प्रसिद्धमस्ति। समुद्रस्य तलान्दोलनकारणात् समुद्रस्यतलोपरि जलं तीव्रवेगेन उपर्यध: दोलायते यस्मात् सुनामी–ऊर्मिका: उत्पद्यन्ते। समुद्रभूकम्प:, अग्निनगस्फोट:, उल्कापातादिकं–सुनाम्या: प्रमुखकारणं वर्तते। सन्दर्भचित्रम् –

नारदसंहितायामुक्तं यत् यदा परिवेषान्तर्गता:[16] पञ्चग्रहा: भवन्ति तदा जलप्रलयकारी भवतीति। यथा–

**चत्वार: परिवेषस्था नृपस्य मरणप्रदा:।**
**परिवेषगता: पञ्च जलप्रलयदा ग्रहा:[17]॥**

3.2. महापूर:–नदीषु, जलस्रोतस्सु, जलाशयादिषु अत्यधिकजलप्रवाहेन अत्यधिजनधनहानिर्भवति तदेव महापूरनाम्ना ज्ञायते। सन्दर्भचित्राणि –

यदा मेघयुक्तं विद्युत्सहितं स्निग्धगन्धर्वनगरमाकाशे दृश्यते तदा अतिवृष्टिकारणात् भुवि जलसम्प्लावः भवति[18]। यदा श्वेतवर्णीया विद्युत् पतति तदा भुवि जलसम्प्लावः भवति[19]। एवमेव यदा शुक्रः कृत्तिकां भित्वा गच्छति तदा नदीषु कूलातिक्रान्तं जलं वहति[20]।

**4. जैविकविषयाणां ज्ञानम् –**

4.1. दुर्भिक्षम् – यस्मिन् कस्मिन्नपि क्षेत्रे दीर्घकालं यावत् यदा अल्पवृष्टिः (वृष्ट्याभावः) अतिवृष्टिः (वृष्ट्याधिक्यः) वा भवेत् तदा दुर्भिक्षं भवति। अस्यां परिस्थितौ मुख्यरूपेण क्षेत्रीयकुपोषण-क्षुधा-महामारि-मरणाभिवृद्धिश्चअत्यधिकं भवति। सन्दर्भचित्रम् –

दुर्भिक्षविषये शास्त्रकारैः उक्तं यत्आकाशे मेघानामभावानन्तरमपि दिवसे निशि वा,प्राच्यां प्रतिच्यां वा इन्द्रधनुषस्य दर्शनं भवेत् चेत् दुर्भिक्षं भवति[21]। यदा सूर्यबिम्बः घटाकारो प्रतीयते तदा तत्र जनाः बुभुक्षाकारणात् प्राणान् त्यजन्ति। यत्र खण्डाकृतिः दृश्यते तत्रजनानां नाशः,छत्राकारे देशनाशश्च जायते[22]। यदा आषाढीपूर्णिमायां सूर्यास्तसमये आग्नेयवायुः वहति तदा भुवि अग्निज्वालादर्शनं भवति। अर्थात् भूमौ वृष्ट्यभावः अग्निभयं च भवति[23]। नारदसंहितायामप्युक्तं यत् यदा गुरुशुक्रौ उभौ समसप्तके भवेतां तथा प्राग्वीथ्यां पश्चिमवीथ्यां वा संस्थितौ भवेतां, तदा वृष्ट्याभावेन दुर्भिक्षं महामारी च जायते[24]।

एवं प्रकारेण ज्योतिषशास्त्रस्य संहितास्कन्धे पर्यावरणसम्बन्धिविषयाणां सुविस्तृतंवर्णनं लभ्यते।

**निष्कर्षः-**

अनेन अध्ययनेन ज्ञायते यत्पर्यावरणसम्बन्धिविषयेषु ज्योतिषशास्त्रीयाचार्यैः सुविस्तृतम् अध्ययनं चिन्तनम् अनुसन्धानं कृतं तस्मादेव नानाविधाः ग्रहयोगादयः पर्यावरणप्रभावकविषयान् स्पष्टयन्ति।एवञ्च यानि पर्यावरणीयवैज्ञानिककारणानि गर्ग-पराशर-कश्यप-वसिष्ठ-नारदादिमनीषिभिर्निबद्धानि तानि सर्वाणि अद्यतनीयोपकरणेभ्यः सरलानि अल्पव्ययसाध्यानि च सन्ति। यदा वयं पर्यावरणशोधक्षेत्रे ज्योतिषशास्त्रेष्वुक्तयोगैः सह कार्यं कुर्मः अथवा ज्येतिषशास्त्रशोधक्षेत्रे अन्यविषयेण सह अन्तसम्बन्धं स्थापयित्वा शोधकार्यं कुर्मः तर्हिआधुनिकवैज्ञानिकानां कृते, भावि मानवसमाजस्य च कृतेनूतनान्वेषणार्थं मार्गं प्रशस्तंकर्तुं शक्नुमः।

## पादटिप्पणी

1. संस्कृत साहित्य मञ्जुषा, पृष्ठसंख्या, 302
2. ज्योतिःशास्त्रमनेकभेदविषयं स्कन्धत्रयाधिष्ठितं।
तत्कार्त्स्न्योपनयस्य नाम मुनिभिः सङ्कीर्त्यते संहिता॥
स्कन्धेऽस्मिन् गणितेन या ग्रहगतिस्तन्त्राभिधानस्त्वसौ।
होरान्योऽङ्गविनिश्चयश्च कथितः स्कन्धस्तृतीयोऽपरः॥ बृहत्संहिता, उपनयनाध्यायः, श्लोकसंख्या, 09
3. https://www.scotbuzz.org - पर्यावरण क्या है। पर्यावरण के प्रकार ?
4. असुरकोणभवः क्षणदामुखे वहति चेदनिलो विनलोऽम्बुदः।
अतिकरालकपालकुलावृता वसुमती रुदतीव विलक्ष्यते।।वनमाला 01.15
5. गुरुर्भृगुश्चापरपूर्वकाष्ठयोः परस्परं सप्तमराशिगौ यदा।
तदा प्रजा रुग्भयशोकपीडिता न वारि पश्यन्ति पुरन्दरोज्झितम्।।बृहत्संहिता, 09.37
6. सप्तरात्रं दिनार्धं च यः कश्चिद् वाति मारुतः।
महद्भयं च विज्ञेयं वर्षं वाऽथ महद् भवेत्॥ भद्रबाहुसंहिता, 09.41
7. तीव्रदिवाकरकिरणाभितापिता मन्दमारुता जलदाः।
रुषिता इव धाराभिर्विसृजन्त्यम्भः प्रसवकाले।।बृहत्संहिता, 21.24
8. चन्द्रार्कौ मन्दरश्मी ग्रहगणसहितो वान्ति वाताः प्रचण्डाः।
चक्राकारं समग्रं भ्रमति जगदिदं मीनगे सूर्यसूनौ।।वसिष्ठसंहिता, 08.06
9. कृष्णा तु कृष्णमार्गस्था वातवर्षावहा भवेत्। भद्रबाहुसंहिता,04.05
10. निहन्ति शुक्रः क्षितिजेऽग्रतः प्रजां हुताशशस्त्रक्षुदवृष्टितस्करैः।
चराचरं व्यक्तमथोत्तरापथं दिशोऽग्निविद्युद्रजसा च पीडयेत्।।बृहत्संहिता,09.41
11. न मित्रभावे सुहृतो व्यवस्थिताः क्रियासु सम्यग् न रता द्विजातयः।
न चाल्पमप्यम्बु ददाति वासवो भिनत्ति वज्रेण शिरांसि भूभृताम्।।बृहत्संहिता, 09.39
12. धूमोऽनग्निसमुत्थो रजस्तमश्चाह्निजं महाभयदम्।
व्यभ्रे निश्युडुनाशो दर्शनमपि चाह्नि दोषकरम्।।बृहत्संहिता, 46.21
13. हौतभुगजपादायमयाम्यर्क्षेषु शीतदीधितेस्तनयः।
अतिविपुलकरोत्यग्निं घ्नन् देहभृतां सप्तधातुविकलकरः॥ वसिष्ठसंहिता,05.05
14. गुरुणा जिते बुधे कम्पते च मही।।बृहत्संहिता, 17.16
15. भूमिसुतः फाल्गुन्योरुदयं कृत्वाथ वक्रितो वैश्वे।
प्रजापत्येऽस्तमितः करोति निखिलधराभ्रमणम्।।वसिष्ठसंहिता, 04.07
16. सम्मूर्च्छिता रवीन्द्वोः किरणाः पवनेन मण्डलीभूताः।
नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषाः।।बृहत्संहिता, 34.01
17. नारदसंहिता, 36.37
18. यदा चाभ्रैर्घनैर्मिश्रं सघनैः सबलाहकम्।
गन्धर्वनगरं स्निग्धं विन्द्यादुदकसंप्लवम्।।भद्रबाहुसंहिता, 11.21
19. अथ नीलाश्च पीताश्च रक्ताः श्वेताश्च विद्युतः।
एतां श्वेतां पतत्यूर्ध्वं विद्युदुदकसंप्लवम्।।भद्रबाहुसंहिता, 05.15
20. भिन्दन् गतोऽनलर्क्षं कूलातिक्रान्तवारिवाहाभिः।
अव्यक्ततुङ्गनिम्ना समा सरिद्भिर्भवति धात्री।।बृहत्संहिता, 09.24
21. उपला विना जलधरैर्विकृता वा प्राणिनो यदा वृष्टाः।
छिद्रं वाप्यतिवृष्टौ सस्यानामीतिसञ्जननम्॥
व्यभ्रे नभसीन्द्रधनुर्दिवा यदा दृश्यतेऽथवा रात्रौ।
प्राच्यामपरस्यां वा तदा भवेत्क्षुद्भयं सुमहत्।।बृहत्संहिता, 46.42,45
22. क्षुन्मारकृद्घटनिभः खण्डो जनहा विदीधितिर्भयदः।
तोरणरूपः पुरहा छत्रनिभो देशनाशाय।।बृहत्संहिता, 03.31
23. यदाग्नेयो वायुर्मलयशिखरास्फालनपटुः।
प्लवत्यस्मिन् योगे भगवति पतङ्गे प्रवसति॥
तदा नित्योद्दीप्ता ज्वलनशिखरालिङ्गिततला।
स्वगात्रोष्मोच्छ्वासैर्वमति वसुधा भस्मनिकरम्।।बृहत्संहिता, 27.03
24. मिथः सप्तम राशिस्थौ पश्चात् प्राग्वीथिसंयुतौ॥
गुरुशुक्रावनावृष्टिर्दुर्भिक्षमरणप्रदौ।
कुजज्ञजीवरविजाः शुक्रस्याग्रेसरा यदा॥
युद्धातिवायुदुर्भिक्षं जलनाशकरा तदा।नारदसंहिता, 02.103-105

*शोधच्छात्रा, ज्योतिषविभागः*
*केन्द्रीयसंस्कतविश्वविद्यालयः,*
*वेद-व्यासपरिसरः बलाहरः, ( हि.प्र. )*

ISSN 2456-3420

# ज्योतिषसिद्धान्तानां प्राच्यपाश्चात्यदृशा अनुशीलनम्

**Rajat Goutam Chhetri**

ज्योतिषं नूनमेव सर्वप्राचीनं विज्ञानं वर्तते, कथनेऽस्मिन् लेशोऽपि संशय: नास्ति। ज्योतिषं स्वत:प्रवर्तित: सर्वाधिकप्राचीन:तथा च एकस्मिनर्थे सर्वाधिक: तिरस्कृतविषयोऽपि वर्तते। तिरस्कृतं किमर्थं इत्युक्ते, अद्यत्वे नक्षत्रसूचका: शास्त्रमिदं अविदित्वैव स्वोदरं पोषयन्ति। अर्थात् विना ज्ञानं जनान्वञ्चयति। इतोऽपि कारणानि सन्ति यथा प्राय: ये जना: ज्योतिषे विश्वासं कुर्वन्ति तेऽपि ज्योतिषं केवलं फलकथनमेव इति विचिन्तयन्ति। फलकथनमपि शास्त्रस्यास्य एक: भाग: वर्तते परञ्च केवलं एतावदेव अस्य शास्त्रस्य प्रयोजनं अस्तीत्यपि अस्माभिर्वक्तुं न शक्यते। प्राचीनज्योतिषविज्ञानं अधुनिकपरिप्रेक्ष्ये अस्माभि: ज्ञातव्य: वर्तते। अस्य वैज्ञानिकतां साधयितुं प्रयास: न क्रियते मया परञ्च विज्ञानमिदं कथं प्रभावं जनयति इत्येव वक्तुं प्रयतते अस्मिन् शोधपत्रे।

ज्योतिषं सर्वप्राचीनं विज्ञानं एतदर्थं अस्ति यत् मनुष्याणां इतिहासस्य अन्वेषणं यदा अभूत् तत्र एतादृश: काल: एव नासीत् यत्र ज्योतिषस्य सत्ता स्थिति: च नासीत्। पञ्चशताधिकत्रिसहस्रख्रिस्तवर्षप्राक् (3500 ई.पू.) सूमेरसभ्यतायां प्राप्त: अस्थ्यवशेषेषु ज्योतिषस्य चिन्ह: अङ्कित: वर्तते। पाश्चात्यदेशेषु प्राचीनतमेषु अन्वेषणेषु पञ्चशताधिकत्रिसहस्र-ख्रिस्तपूर्वस्य एतेषां अस्थीनामेव वर्तते। यत्र ज्योतिषस्य चिन्ह: तथा च चन्द्रस्य यात्राया:उल्लेख: प्राप्यते। परञ्च भारते तु इतोऽपि प्राचीनं वर्तते। ऋग्वेदे पञ्चनवतिसहस्रवर्षपूर्वं ग्रहनक्षत्रादीनां या स्थिति: आसीत् तस्य उल्लेख: अस्ति। अस्याधारेण माननीय: लोकमान्यतिलकमहोदयेन निश्चितं यत् ज्योतिषं नवतिसहस्र-ख्रिस्तवर्षपूर्वस्य तु निश्चयेन स्यात्। इतोऽपि पूर्वस्य भवेत्। यतोहि वेदे यदि पञ्चनवतिसहस्रवर्षप्राक् नक्षत्राणां ग्रहाणां स्थिति: विषयकं ज्ञानमुल्लेख: अस्ति चेत् ज्योतिषं एतावद् प्राचीनं तु भवति एव। तस्मिन् काले वर्तमानानां नक्षत्रस्थिती: पश्चात् अवगन्तुं साधनं नासीत् परं अधुना आधुनिकविज्ञानवशात् तादृशं साधनं उपलभ्यते येन भूतकाले वर्तमानानां नक्षत्राणां स्थिति: कदा किदृश: आसीतिति अस्माभि: अवगन्तुं शक्यते। ज्योतिषस्य सर्वाधिक: मान्यता भारते प्रभूत:। सत्यं तु इदमेवास्ति यत् ज्योतिषस्य कारणादेव गणितस्य जन्म अभूत्। ज्योतिषस्य गणनाया: कृते एव सर्वादौ गणितस्य जन्म अभवत् तदर्थं अङ्कगणितस्य य: अङ्क: वर्तते स: भारतीय: एव। विश्वस्य या कापि भाषासु एक: प्रभृति नव पर्यन्तं ये अङ्का: भवन्ति ते समस्तभाषासु भारती अस्ति। एवञ्च सम्पूर्णमपि विश्वे नव अङ्का: स्विकृता: तस्यापि इदमेव कारणं वर्तते यत् नव अङ्का: भारते एव अभूत, एवं शनै: शनै: सम्पूर्ण जगति प्रसृत:। आङ्गलभाषाया: Nine संस्कृतभाषाया: एव नव शब्दात् आगत: Eight शब्दोऽपि तथैव अष्टौ इति शब्दस्य परिवर्तितरुप:। एकप्रभृति: नव पर्यन्तं जगत: समस्तसभ्यभाषासु गणितस्य अङ्कानां प्रचलनं अस्ति तद् भारतीयज्योतिषस्य प्रभावे एव अभू:।

भारतवर्षात् सर्वादौ ज्योतिषस्य प्रथमकिरणं सूमेरसभ्यतायां प्राप्त:। सूमेरीयन्जनै: सर्वादौ पाश्चात्यदेशे ज्योतिषस्य द्वारंसमुद्घाटितम्। एभि: नक्षत्राणांवैज्ञानिकमध्ययनस्य आधार: स्थापितम्। नक्षत्रवेधार्थं एकं उच्चस्तम्भं स्वस्मिन् प्रदेशे स्थापितम्। सुमेरियन् जनै: सम्यक् नक्षत्राणां ज्ञानं कृत्वा सूमेरसभ्यतायां ज्योतिषज्ञानं प्रसारितम्। तत्र उच्चस्तम्भे एते खगोलविदा: अहोरात्रं आकाशाध्ययनं अकार्षु:। तत्र कारणद्वयं आसीत् अध्ययनस्य, एकं तावत् एते ज्योतिषस्य सूक्ष्मसूत्राणिअज्ञासिषु: यत् मानवजीवने या कापि घटना: भवन्ति तासां घटनानां प्रारम्भिकस्रोत: कथञ्चित् नक्षत्रै: ग्रहै: सह सम्बन्ध:अस्तीति। इदं ज्ञानंसहस्रत्रय-ख्रिस्तवर्षप्राक् एते अज्ञासिषु:, परञ्च भारते तु विज्ञानमिदं वेदकालादेव, सृष्ट्यारम्भादेव अस्ति। ज्योतिषविज्ञानं भारतात् पाश्चात्या: अचोरयन् इति मया अत्र वक्तुं न प्रयतते। वस्तुत: विज्ञानं सर्वत्र भवति केवलं तस्य अन्वेषणकाल: अपेक्षितो भवति। तद् भारतीयाचार्यै: महान् परिश्रमेण साधितम्, तथा च पाश्चात्यविद्वद्भिरपि तस्य अनुसरणं विधाय ज्ञानमिदं अतन्वत। एतेषां या: धारणा: यत् पृथिव्यां व्याधिभयं, क्रान्ति, लोकभयं, (PENDAMIC) यत् किमपि प्रभवति तत् सर्वं नक्षत्रेण सम्बन्धित: वर्तते।

साम्प्रतविज्ञानं यै:बुध्यते, तै: कथ्यते सुमेरसभ्यता मनुष्यजातीनां इतिहासस्य प्रारम्भं चक्रिरे। इतिहासज्ञा: अपि उच्यते सर्वप्रकारका: इतिहासा: सुमेरसभ्यताया: प्रारम्भो भवतीति। वयं केवलं एतदेव वक्तुं शक्नुम: वैदिकसभ्यता एव सर्वप्राचीना इति। वेदस्य काल निर्धारणे अक्षमाधुनिकविज्ञानं अपि वैदिकसभ्यता प्राचीना वा न इति संशये अस्ति। प्राचीनभारतसाहित्यस्य सर्वाधिकक्लेश: विषय: अस्ति-कालनिरिधारणम्। अनेका: ग्रन्था: उपलब्धा: परञ्च वयं तावत् तस्य ग्रन्थस्य कालं न अज्ञासिष्म न ज्ञास्यामोऽपि। आधुनिकविज्ञानं सहस्रलक्षवर्षपूर्वस्य प्राप्त्यवशेषस्य रेडियो कार्बन, पोटाशियम-आर्गन विधिना कालनिर्धारणे समर्थसन् अपि वेदकालं निश्चितुं असमर्थ: अस्ति अधुनापि। केचित् वेदकालं लक्षाधिकपूर्वं मन्वते, केचित् तु 1000(ई.पू.)अस्मात् पूर्वं न भवितुं शक्नोति इति वदन्ति। वेदाङ्गज्योतिषस्य रचनाकालविषयेऽपि निश्चयेन इदमित्थं इति वक्तुं अशक्य:।[1] पञ्चशताब्धिप्राक् केषामपि भारतीयगणितज्ञानां वा ज्यौतिषकानां जीवनस्य प्रामाणिकज्ञानं न प्राप्यते। बौधायन-शुल्वसूत्र, कात्यायन-शुल्वसूत्र इत्यादिनाम्ना प्रसिद्धसूत्रग्रन्थानां रचयिता बौधायनकात्यायनादि पण्डिता: स्यु: इतिकृत्वा अस्माभि: एतान् तत्कालस्य रेखागणितज्ञा: इति मनुते। महात्मालगधं वेदाङ्गज्योतिषस्य

रचनाकारः मनुते। परञ्च लगधाचार्यबौधायनकात्यायनादया-ऽऽचार्याः कुत्र कस्मिन् काले च बभूव इति अधुनापि स्फुटं नास्ति। भास्कराचार्यस्य कालं यावत् (1150 ई.) अस्माकं देशे प्राचीनपरम्परायाः गणितज्योतिषस्य विकासः जायमानः आसीत्। कालेऽस्मिन् भारतीयविज्ञानं पाश्चिमएशियायाः अनेकदेशेषु तथा युरोप इत्यत्र प्राप्तमासीत्। परञ्च अस्मद्देशस्य विकासः अस्थात् एवं ज्योतिर्विज्ञानस्य विकासः भारते शनैः शनैः समाप्तः।

वस्तुतः विज्ञानं न प्राचीनं नार्वाचीनम्। वस्तुतः ज्ञानस्यान्वेषणमेव विज्ञानफलं किल। ज्ञानस्य सत्ता नास्ति चेत् विज्ञानत्वं न स्यात्। यथा माननीय आइसेक न्यूटोन महोदयस्य अन्वेषणात् प्राक् किं भूमौ गुरुर्वाकर्षणं नासीत् वा?। भवतु वयं इतोऽपि पूर्वं गच्छामः। भास्कराचार्यप्रतिपादितगुरुत्वाकर्षण-सिद्धान्तप्राक् किं वा भूमौ आकर्षणशक्तिः नासीत्? तात्पर्यं किमित्युक्ते विशिष्टज्ञानं पूर्वमेव विद्यमानं भवति केवलं तस्य अन्वेषणेन प्रतिपादनीयाः भवति तदेव आचार्यभास्करः तथा न्यूटोन महोदयः अकार्षुः। आचार्यभास्करस्यानन्तरं अस्माकं देशे भास्करवत् गणितज्ञः वा ज्यौतिषिकः नाभूत्। षोडशशतकात् अष्टादशशतके मध्ये केरले केचन गणितज्ञाः अभूवन् येषां टीकाग्रन्थेषु केचन नूतनविषयाः दृश्यन्ते, परञ्च एतावता यूरोपदेशे गणितं अत्यधिकप्रसृतं अभूत्। ख्रिष्ताब्दस्याष्टमनवमशतके अनेकविज्ञानग्रन्थानां अरबीभाषायां अनुवादः अभवत्। एते भारतीय-युनानविज्ञानाधारेण विज्ञानस्यबीजः स्थापितः तथा अस्य विकासः अकृषत। अन्ते च अरबीविज्ञानेन भारतीयविज्ञानमपि प्रभावितः। एवं भारतीयविज्ञानस्य प्रभावः पाश्चात्यदेशेषु अभूत्। ज्योतिषम् तिरस्कृतविषयः न भवितुं शक्नोति।

अत्र वयं कानिचन पाश्चात्यवैज्ञानिकानाम् अन्वेषणकार्यम् अवगन्तुं प्रयासः कुर्म येन प्राचीनविज्ञाम् अवगन्तुं सुलभं भवति। सूर्यःकेवलं एकं अग्निगोलं नास्ति अत्यन्तसक्रियः वर्तते एवं प्रतिपलं सूर्यस्य तरङ्गे रुपान्तरं जायते। तस्य रुपान्तरं प्रलिपलं प्राणिषु प्रभावं जनयति। सूर्यग्रहणकाले एव एतत् सर्वं अस्माभिः अनुभूयते खगाः अरण्ये कोलाहलं न कुर्वन्ति। सर्वेऽपि प्राणिनः भयाक्रान्ताः दृश्यन्ते। 1843 ई. Samuel heinrichschwab रुसवैज्ञानिकेन सूर्यस्य अध्ययने sunspot प्राप्तम्।[2] प्रत्येक दश वा एकादशवर्षस्य अन्तराले सूर्ये विस्फोटः भवति। आङ्गभाषायां The solar cycle इति कथ्यते। एवं तस्य प्रभावः भूमौ घटितघटनासु भवति इति प्रतिपादितम्। सः एवमपि अवोचत् यत् पृथिव्यां भवितानां क्रान्तीनां, महायुद्धानां तथा च व्याधिभयानां कारणं सूर्ये भवितानां विस्फोटमेवन तु अन्यत् इति। तर्हि सूर्य आत्मा जगतस्तस्थुषश्च[3] इति वैदिकमन्त्रेण सूर्यः जगतः आत्मा अस्तीति प्रतिपादितं चेत् क्लेशः न स्यात् वैज्ञानिकानाम्। आत्मनि यदि कश्चित् क्लेशः भवति चेत् सम्पूर्णशरीरे क्लेशः जायते।

एकः पाश्चात्यचिकित्सकः आसीत् Paracelsus.He was a pioneer in several aspects of the "medical revolution" of the Renaissance.[4]अनेन एका विचित्रमान्यता स्थापिता तथा च सा मान्यता कदाचित् चिकित्साविज्ञानस्य अवधारणां परिवर्तनं करिष्यति, कृतञ्च-Astrology was a very important part of Paracelsus's medicine and he was a practising astrologer - as were many of the university-trained physicians working at that time in Europe. Paracelsus devoted several sections in his writings to the construction of astrological talismans for curing disease. पेरासिलियसस् महोदयस्य एकं वाक्यं नूनमेव प्राचीनविज्ञानं अवगन्तुं सरलं भविष्यति वाक्यं तावत् -The purpose of science is not only to learn more about the world around us, but also to search for divine signs and potentially understand the nature of God.[5] एतावता ज्योतिषं सर्वाधिकप्राचीनः विषयः एवं सर्वाधिकः तिरस्कृतविषयोऽपि वर्तते सर्वाधिकमान्यः च। विश्वस्य 78 प्रतिशत जनाः ज्योतिषे विश्वासं कुर्वन्ति, परञ्च एते सामान्यजनाः। सिजेजम् महोदयस्य वचनं अद्य सार्थकः दृश्यते। तेन उक्तमासीत् त्रिशतवर्षात् विश्वविद्यालयस्य द्वारं ज्योतिषस्य कृते पिहितमस्ति परञ्च ज्योतिषं पुनः विश्वव्यापकं अवश्यं भविष्यतीति। तदद्य अस्माभि अनुभूयते विश्वस्य प्रायः देशेषु विश्वविद्यालयेषु ज्योतिर्विज्ञानस्य अध्ययनम् जायते। अस्यापि कारणं अस्ति अध्ययनस्य, एतावता ज्योतिषसूत्राणां सिद्ध्यर्थं तावत् साधनानि नासीत् परं अधुना तत् सिद्ध्यर्थं साधनानि बहुनि सन्ति अवसराः च बहवः सन्ति। पेरेसिलियसस् महोदयेन मान्यतेऽयं प्रदातं यत् मानवः तदा एव रोगी भवति यदा तस्य एवं तस्य जन्मनः युक्तः नक्षत्रैः सह सामन्जस्यम् नष्टं भवति। एतदवगच्छामः किञ्चित्, अस्मात् बहुप्राक् पाईथागोरस् महोदयेन युनानदेशे harmony of the spheres[6] इति सन्दर्भे अद्भुतचिन्तनं अदात्। चिन्तनमिदं यदा अदात् ततः प्राक् पाईथागोरस् भारतस्य तथा ईजीप्टदेशस्य भ्रमणं कृतम् आसीत्। तस्य चिन्तनं आसीत् यत् अन्तरिक्षे नक्षत्राणि ग्रहाः उपग्रहाः यात्रां कुर्वन्ति तदा अन्तरिक्षे प्रत्येकनक्षत्रस्य गतिः विषेशध्वनिं जनयति। एतेषां नक्षत्राणां ध्वनीनां एकः सम्बन्धः अस्ति तत् विश्वस्य संगीतवद्धता Harmony इति शब्दः सः भणति स्म। यदा कश्चित् मनुष्यः जन्मं एति तदा तस्य जन्मक्षणे नक्षत्राणां ग्रहाणां या संगीतव्यवस्था भवति सा तस्य जातकस्य प्राथमिकनिर्मलचित्ते अङ्कितः भवति। तदेव जीवनपर्यन्तं तं जातकं स्वस्थं अस्वस्थं च कारयति। पाईथागोरस् महोदयेन स्वस्य चिन्तनं स्वमत्या स्थापितम्। तथैव वराहमिहिरादयाः आचार्याः अपि कर्माजितं पूर्वभवे सदादि यत्तस्य पंक्तिं समभिव्यनक्ति। इति पङ्क्त्या ग्रहनक्षत्राणि कथं प्रभावं जनयति तथा च नाभसाद्यनेकयोगाः ग्रहनक्षत्रस्य स्थितिवशात् कथं जीवनं प्रभावयति। तस्य मानवजीवनेन सह कथं सम्बन्धः इत्येतत्सर्वं प्राचीनऋषयः सर्वत्र संस्कृतवाङ्मयेषु सूत्राणि प्रतिपादितानि। ब्रह्माण्डे मानवजीवनस्य

रहस्यानि कथं निहितमस्तीति दृष्ट्वा जना: ज्योतिषविषये प्राचीनविज्ञाने कुतो न अवगाहनं न कुर्वन्ति।

ऋग्वेदस्य दशममण्डलस्य पुरुषसुक्ते विराटपुरुषस्य चर्चा अस्ति तत्र सृष्टिविज्ञानं अवलोक्य आश्चर्य भाषते। यथा आधुनिकयुगे आधुनिकसाधनानि सन्ति ब्रह्माण्डस्य रहस्यानि ज्ञातुं तथा प्राचीनकाले नासीत् तथापि विश्वस्यसर्वप्राचीनग्रन्थवेदे यथा आधुनिकवैज्ञानिका: तथ्यानि अन्वेषणं कुर्वन्ति तथैव तत्र वेदे अस्माभि: प्रासुं शक्यते। एतत् अवगन्तु अस्माभि: 1950 ई. कालेऽस्मिन् विकसितविज्ञानं अवगन्तव्यम्। तच्च ब्रह्मरसायनम् (Cosmic Chemistry)[8] इति। सम्पूर्णमपि ब्रह्माण्डं एकं शरीरं वर्तते। यथा अस्माकं शरीरे पादौ कष्टं चेत् मनसि तस्य प्रभाव: भवति अर्थात् अस्माकं शरीरस्य कस्मिञ्चिदपि अङ्गे पीडा चेत् शरीरस्य प्रत्येकाङ्गेषु तस्य प्रभावो वा तस्य ज्ञानं भवति तद्वदेव ब्रह्माण्डे कुत्रापि कस्मिञ्चिदपि नक्षत्रेषु ग्रहेषु या कापि घटना जायते तस्य प्रभाव: सर्वत्र ब्रह्माण्डे भवति। एतदेव ब्रह्माण्डशरीरं पुरुषसुक्ते दरीदृश्यते।एतावानस्य महिमातो ज्यायाँश्च पूरुष:। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि।।त्रिपादूर्ध्व उदैत्पुरुष: पादोऽस्येहाभवत्पुन:। ततो विष्वङ् व्यत्क्रामत्साशनानशनेऽअभि।।[9] अस्य विराटपुरुषस्य एकचरणे सर्वे प्राणिन: विद्यते एवं अवशिष्टचरणत्रये अनन्त: अन्तरिक्ष: वर्तते। ततो विराडजायत।।[10] तत: विराटब्रह्माण्ड: अजायत। वैदिकऋचाभि: ज्ञायते यत् प्राचीनविज्ञानं साधनरहितस्सन् अपि अनन्तब्रह्माण्डविषये अनभिज्ञ: नासीदिति।यथा हंस मण्डलं सिङ्गस् नाम्ना, वीणामण्डलं लैर नाम्ना, हरिकुलेश हरक्युलस नाम्ना एवञ्च शेष: सेर्पेन्स नाम्ना पाश्चात्यविद्वद्भि: एतेषां मण्डलानां उद्धरणं कृतम्। तत्सर्वं ब्रह्माण्डस्यैव एक: भाग: वर्तते इति पूर्वाचार्यैरपि प्रख्यापितम्। ब्रह्माण्डशरीरमेव विष्णु:, ब्रह्ममण्डलमेव चतुर्मुखब्रह्मा वर्तते, रिंग नेब्युला एव विष्णो: नाभि: तथा निहारिका एव क्षीरसागर: अस्ति। ब्रह्मा एव अस्य जगत: स्रष्टा वर्तते। तस्मादेव सर्वाणि भूतानि जातानि। अधुनिकमतमपि एतदेव वर्तते वृत्ताकारनिहारिकात: अस्य जगत: उत्पत्ति: इति।इदंविश्वं प्रत्यहं एधते अन्ते च प्रभूतस्थाने विलयमेव अस्य अन्त: वर्तते। अस्य अन्वेषणे स्टीफेन हाकिंग महोदय: महान् प्रयत्न: अकार्षीत्। तथा च अन्ये वैज्ञानिका: रहस्यमयं विश्वं जिज्ञासितुं प्रयतते। एतत् सर्वं पुराणादिषु, आख्यानिदिषु बहुत्र प्रप्यते। अस्माकं गहनशोधकार्यमेव रहस्यमेतत् प्रकटयिष्यते। विश्वे वैदिकसाहित्यं शीर्षस्थाने आनेतुं वैदिकसाहित्ये शोध: एव विकल्प: अवशिष्यते।अद्य आवश्यकं अस्ति आधुनिकविज्ञानेन सह अन्तर्विषयकशोधस्य। प्राचीनविज्ञानं अवगन्तुं आधुनिकविज्ञानस्य सततं आवश्यकं वर्तते। तदा एव वयं सर्वप्राचीना सभ्यता सुमेर्सभ्यता न अपितु वैदिकसभ्यता एव प्राचीना इति साधयितुं शक्नुम:। एतादृशतत्वानि विश्वे आनेतुं शोधस्य आवश्यकता वर्तते।

## सन्दर्भा:


1 प्राचीन भारत में विज्ञान

2 https://en.wikipedia.org/wiki/Heinrich_Schwabe

3 यजुर्वेद 7/42

4 https://en.wikipedia.org/wiki/Paracelsus

5 Astronomia magna

6 Riedwed 2005, P.29-30

7 बृहज्जातकम् अ.1.श्लो.3

8 www.researchgate.net

9 ऋग्वेदसंहिता10.90.3

10 ऋग्वेदसंहिता10.90.5

ISSN 2456-3420

# न्यायसिद्धान्तमुक्तावल्याः पदार्थोद्देशवादे दिनकरी-प्रभा-मञ्जूषाटीकानां समीक्षात्मकमध्ययनम्

सुव्रत-गायेनः

**उपोद्घातः-**

जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्म्मणोः। ह्रासदर्शनतः...।।[1] इति विदितमेव विदुषां सुभाषित-मुदयनाचार्याणाम्। अतो मनुजनूनां स्वाध्यायसंस्कारविद्यादिह्रासात् सुकुमारमतीनां सुखबोधाय अनायासशास्त्रसिद्धान्तावधारणेन विद्यासमृद्धये च सम्प्रति आकरग्रन्थानां व्याख्यानबन्धनिबन्धन-प्रयासो विदुषाम्। परं नासौ मुनिर्यस्य मतं न भिन्नम्। तथात्वे सिद्धान्तमुक्तावल्याः टीकाकृतामपि मतेषु मिथो वैमत्यं विद्वद्विप्रतिपत्तिजनकं स्यादित्यत्र कः संशयः? विविधविबुधव्याख्यानेषु यद्यपि एकमेव समानं विषयमाश्रित्य व्याख्यातारस्तत्तद्ग्रन्थेषु तत्तत्सिद्धान्तानुगुणं मूलग्रन्थव्याख्यान-परास्तथापि व्याख्यातृबुद्धिवैभ-न्र्यान्मिथो वैमत्यं सुलभम्। तेषां परस्परसमीक्षणेन विना तादृशव्याख्यातृकर्कश-तरगीर्वारिपिच्छिले अध्वनि न प्रवर्तते मतिमतां सतां मतिरिति तयोरत्र समीक्षणमाद्यं प्रयोजनम्। किञ्च तेषां समीक्षणेनैव मूलकृतामाशयः अपि स्फुटतरः स्यादिति द्वितीयमपि प्रयोजनं मनसि निधाय न्यायसिद्धान्तमुक्तावल्याः पदार्थोद्देशवादे दिनकरी-प्रभा-मञ्जूषाटीकानां समीक्षात्मकमध्ययनमिह मद्बन्धे निबध्यते समासतः।

न्यायसिद्धान्तमुक्तावल्याः निगूढतत्त्वप्रकाशार्थं नैकैर्विद्वद्भिर्नैकाः टीकाः आटीकिताः। टीकासुतासु महादेवप्रारब्धं दिनकरभट्टप्रपूरितं दिनकरीयं, रायश्रीनृसिंहशास्त्रिणः प्रभा, श्रीपट्टाभिरामशास्त्रिणं मञ्जूषा च सर्वा हि टीका अतिशय्य विद्योतन्तेतमाम्। न्यायसिद्धान्तमुक्तावल्याः पदार्थोद्देशवादे दिनकरी-प्रभा-मञ्जूषाटीकानां समीक्षात्मकम् अध्ययनम्-

**द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम्।**
**समवायस्तथाभावः पदार्थाः सप्त कीर्तिताः॥**[2]

इति कारिकया श्रीविश्वनाथन्यायपञ्चाननेन कारिकावल्यां पदार्थानामुद्देशः अकारि। एते सप्तपदार्थाः वैशेषिकशास्त्रेषु प्रसिद्धास्तथा न्यायशास्त्रेऽपि स्वीकृताः। तथाहि मुक्तावल्यामगादि-

पदार्थान् विभजते द्रव्यं गुण इति। अत्र सप्तमस्य अभावत्वकथनादेव षण्णां भावत्वं प्राप्तम्, तेन पृथगुपन्यासो न कृतः। एते च पदार्था वैशेषिकप्रसिद्धाः, नैयायिकानामप्यविरुद्धाः। प्रतिपादितं चैवमेव भाष्ये। अत एव चिन्तामणौ सप्तपदार्थभिन्नतया शक्तिसादृश्ययोः अतिरिक्तपदार्थत्वम् आशङ्कितम्।[3] इति।

नन्वन्यैः शक्तिसादृश्यादीनामतिरिक्तपदार्थत्वेनाङ्गी-कारात्कथमत्र सप्त पदार्था इत्युच्यते इति जिज्ञासाशमनाय मुक्तावल्यां विश्वनाथेन शक्तिसादृश्यादीनां पूर्वपक्षिपक्षानुसारं प्रतिपाद्यातिरिक्तपदार्थत्वं खण्डितम्। शक्ति-सादृश्यादीनामतिक्त-पदार्थत्वं खण्डयता तेनागादि-

ननु कथमेते एव पदार्थाः, शक्तिसादृश्योरपि अतिरिक्तपदार्थत्वात्। तथाहि मण्यादिसमवहितेन वह्निना दाहो न जन्यते, तच्छुन्येन तु जन्यते।[4] इत्यादि।

मौलमिदं वाक्यं व्याख्यातुकामेन दिनकरीकारेण भूमिराचयितुमुक्तम्-

मण्यादिसमवधाने सति वह्निना दाहोत्पत्तिवारणाय मण्यादेः कारण-विघटकत्वरूपा प्रतिबन्धकता वाच्या। सा च वह्निनिष्ठदाहानुकूलशक्ति-रूपकारणविघटकतयैव निर्वहति। मण्यादिप्रतिबन्धकत्वान्यथानुपपत्त्या सिद्धायाः शक्तेः षड्भावेषु अनन्तर्भूतत्वात् अतिरिक्तत्वमिति पदार्थाः सप्त कीर्तिताः इति मूलमयुक्तमित्यभिप्रायेण प्राभाकरः शङ्कते नन्विति। अतिरिक्तइति। सप्तपदार्थातिरिक्तेत्यर्थः।[5] इति।

तदाशयस्त्वित्थम् वह्निः दाहं प्रति कारणम्। परं चन्द्रकान्त-मणिविशिष्टो वह्निः दाहं नोत्पादयितुं शक्नोति चन्द्रकान्तमणेः दाहं प्रति प्रतिबन्धकत्वात्। मणेः प्रतिबन्धकत्वं नाम वह्निनिष्ठदाहानुकूलशक्ति-नाशकत्वम्। वह्नौ दाहानुकूल-शक्तेरभावे तन्नाशकत्वरूपं प्रतिबन्धकत्वं मणेः नोपपद्यत इति वह्नौ दाहानुकूला शक्तिः स्वीकर्तव्या। सा च शक्तिः षट्सु भावेषु नान्तर्गच्छतीत्यतिरिक्तपदार्थत्वेन स्वीकरणीया। तेन पदार्थाः सप्त कीर्तिताः इति मूलमयुक्तमिति प्राभाकरमतमाश्रित्य विश्वनाथः शङ्कते ननु कथमेत एवेत्यादिनेति।

प्रभाकारस्तूक्तव्याख्यानं महादेवस्य न स्वीकरोति। तन्नये मौल आक्षेपस्तु शक्तिसादृश्ययोरतिरिक्तपदार्थत्वेन। परं शक्तेरतिरिक्त-पदार्थत्वस्य मीमांसकसम्मतत्वे अपि सादृश्यस्यातिरिक्तपदार्थत्वस्य तदसम्मतत्वादालङ्कारिक-सम्मतत्वाच्च भ्रमात् प्राभाकरश्शकते इत्युक्त्वा मौलाक्षेपस्य भूमी रचिता दिनकरीकृतेति दुष्टं महादेवव्याख्यानम्। तथाहि उक्तम् प्रभाकृता-

केचित्तु मण्यादिसमवहिते सति वह्निना दाहोत्पत्तिवारणाय मण्यादेः कारणविघटकत्वरूपप्रतिबन्धकता वाच्या, सा च वह्निनिष्ठदाहानुकूल शक्तिरूपकारणविघटकतयैव निर्वहतीति मण्यादिप्रतिबन्धकत्वान्य-थानुपपत्त्या सिद्धायाशक्तेः षड्भावानन्तर्भूतत्वादतिरिक्तत्वमिति पदार्थाः सप्त कीर्तिता इति मूलमयुक्तमित्यभिप्रायेण प्राभाकरशङ्कते नन्वितीत्य-वतरणिकामाहुः। तदसत्, सादृश्यस्यातिरिक्तपदार्थत्वाभावात्। उभयोरतिरिक्तपदार्थत्वव्यवस्थापकनन्वित्यदाग्रन्थस्य प्राभाकराभि-प्रायकत्वासम्भवात्।[6] इति।

अत्रेदं विचार्यते यत् मीमांसकदर्शने भट्टैः कुमारिलैः पञ्च पदार्था अङ्गीकृताः। ते हि - द्रव्यं, गुणः, कर्म, सामान्यम्, अभावश्च। परं प्राभाकरैः द्रव्यं, गुणः, कर्म, सामान्यं, समवायः, सादृश्यं, शक्तिः इत्येते अष्टौ पदार्थाः स्वीकृताः। प्राभाकरसम्प्रदायानुसारं ग्रथितायां प्रकरणपञ्चिकायां व्याख्यातेषु प्राभाकरसम्मतपदार्थेषु अनन्यं हि सादृश्यम्। तत्र शालिकानाथैः पूर्वपक्षखण्डनपुरस्सरं सादृश्यं पदार्थान्तरत्वेन प्रतिपादितम् -

किं पुनरिदं सादृश्यम्, नेदं द्रव्यगुणकर्मसामान्यसमवाय-विशेषाणामन्यतमम्। तेषां संग्रहे अस्यापाठात्। उच्यते विषयः अस्य वित्तिसिद्धौ भिन्नद्रव्यादिभावेभ्यः। इति।

सर्ववस्तूनि संविदेकशरणानि। अस्ति चेयं सदृशः इति संवित्। सा च सर्वैव विषयाव्यभिचारिणीति दर्शितं न्यायवीथ्याम्। अतस्संवित्स्वभावसिद्धं सादृश्यं न पाठाभावात् अपह्नवम् अर्हति। तच्च न द्रव्यं, गुणकर्मणोः अपि आश्रितत्वात्। गन्धादयः अपि सदृशबोध-गोचरीभवन्ति, भवन्ति च कर्मण्यपि कर्मान्तरसदृशबुद्धिबोध्यानि। अत एव न गुणत्वं, नापि कर्मत्वम्। अनुवृत्तप्रत्ययनिमित्तत्वाभावाच्च न सामान्यम्। समवायस्तु सम्बन्धरूप इति न तत्र सादृश्यान्तर्भावः। विशेषाख्यं तु पदार्थं प्रमाणवादिनो नानुमन्यन्ते स हि पृथक्त्वादतिरिक्तो नानुमातुं शक्यते। पृथक्त्वं हि परमाणूनां स्थूलद्रव्यारम्भलक्षणकार्योन्नेयम्। तदतिरेकिणि तु विशेषे न किञ्चित्प्रमाणम्। न च परमाणुपृथक्त्वम् एव लिङ्गम्, नित्यत्वात् परमाणुपृथक्त्वस्य। कार्यं हि स्यात् कारणस्य लिङ्गं न च परमाण्वाश्रितं पृथक्त्वं कार्यम् इति प्रमेयपारायणे निर्णीतम्। अतः पदार्थान्तरमेवेदम् शक्तिवत् संख्यावच्चेति प्रमेयपारायणे अप्युक्तम्।[7] इति।

अतः सादृश्यं न केवलमालङ्कारिकैः प्राभाकरैरप्यङ्गी-कृतमिति तन्मतमाशङ्क्य पूर्वपक्षमतोपस्थापनं ग्रन्थकर्तुरिति व्याख्यानं दिनकरीकृतो युक्तमेवेति मे मतिः।

**न्यायसिद्धान्तमुक्तावल्याः सादृश्यस्यातिरिक्तपदार्थत्वानुमाने दिनकरीप्रभामञ्जूषाणां समीक्षात्मकमध्ययनम्-**

प्राभाकरमतानुसार पूर्वपक्षरूपेण सादृश्यस्य पदार्थान्तरत्व-मुपस्थाप्य तन्निराकृतिः कृता विश्वनाथेन मुक्तावल्याम्। तत्र सादृश्यस्य तदैव पदार्थान्तरत्वं यदि नैयायिकसम्मतसप्तपदार्था-नन्तर्भूतत्वमिति ग्रन्थकृता षड्भावानन्तर्भूक्तत्वं सादृश्यस्य प्रख्यापनार्थमुक्तम्-

'एवं सादृश्यमप्यतिरिक्तपदार्थः, तद्धि न षट्सु भावेष्वन्तर्भवति सामान्ये अपि सत्त्वात्, यथा गोत्वं नित्यं तथा अश्वत्वमपि नित्यमिति सादृश्यप्रतीतेः।'[8] इति।

मूलवाक्यमिदं विश्वनाथस्य व्याख्यातुकामेन महादेवेन दिनकर्यामुक्तम्-

तद्धीति। तत् सादृश्यम्, हि हेतौ। सामान्ये अपीति। सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वादित्यर्थः। तेन सामान्यत्वे न व्यभिचारः। व्यतिरेकित्वे सतीति विशेषणान्न प्रमेयत्वादौ व्यभिचारः।[9] इति।

दिनकरीकारनये यस्मात् सादृश्यं षड्भावानन्तर्भूतं तथाभावानन्तर्भूतं च तस्मात् सादृश्यमतिरिक्तः पदार्थः तत्रानुमानं हि सादृश्यं क्लृप्तसप्तपदार्थातिरिक्तम्, षड्भावानन्तर्भूतत्वे सति अभावानन्तर्भूतत्वात् इति। उक्तानुमानस्थहेतुघटकीभूतस्य सत्यन्तभागस्य पक्षे सादृश्ये असिद्धिवारकम् अनुमानं हि सादृश्यं षड्भावानन्तर्भूतम् सामान्येतर-वृत्तित्वे सति सामान्यवृत्तित्वात्, गगनाभाववदिति। अस्य अनुमानस्य हेतौ सामान्येतरवृत्तित्वे सतीति भागस्यानुपदानात्सामान्यत्वे व्यभिचारः। सामान्य-वृत्तित्वमात्रोक्तौ द्रव्यत्वादौ व्यभिचारः। अतो विशिष्टहेतुनैव सादृश्ये षड्भावातिरिक्तत्वं साध्यम्। ननु सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वादिति विशिष्टहेतोः साध्याभाववति प्रमेयत्वे सत्त्वाद्व्यभिचारापत्तिः। अतो हेत्वंशे व्यतिरेकित्वे सति इति विशेषणं योज्यमिति महादेवाभिप्रायः। व्यतिरेकित्वं ह्यत्यन्ताभावप्रतियोगित्वम्। तच्च प्रमेयत्वे नास्ति, प्रमेयत्वस्य केवलान्वयित्वेन अत्यन्ताभावा-प्रतियोगित्वादिति भावः।

नृसिंहशास्त्रिणा नाङ्गीक्रियते दिनकरीमतम्। तन्नये सादृश्यं षड्भावानन्तर्भूतम् सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वात्, गगनाभाववदित्यनुमाने सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वादिति हेतुर्न व्यभिचारदोषदुष्टः। तथाहि प्रमेयं हि प्रमाविषयः। तथा च प्रमेयत्वस्य प्रमाविषयत्वस्वरूपस्य विषयभेदात् भिन्नत्वाद् एकस्मिन् प्रमेयत्वे सामान्येतरवृत्तित्व-सामान्यवृत्तित्वोभयवत्त्वात्मकहेतोरभावात्। तथाहि -

केचित्तु प्रमेयत्वे व्यभिचारवारणाय हेतौ व्यतिरेकित्वे सतीति विशेषणं देयममित्याहुः। तदसत्, प्रमेयत्वस्य प्रमाविषयत्वरूपस्य विषयभेदेन भिन्नतया निरुक्तोभयवत्त्वरूपहेतोरभावात्।[10] इति।

**अन्यथापि दिनकरीमतचिखण्डिषया न्यगादि प्रभाकृता -**

यदि विषयतासम्बन्धेन प्रमावत्त्वमेव प्रमेयत्वं, विषयतासम्बन्धेन सर्वत्र विद्यमानाया ईश्वरप्रमाव्यक्तेः निरुक्तवृत्तिताद्वयवत्त्वेन व्यभिचारस्तदवस्थ इत्युच्यते तदा व्यतिरेकित्वविशेषणदाने अपि समवेतत्वस्य प्रतियोगितासम्बन्धेन समवायवत्त्वरूपस्य तादृशहेतुमत्त्वेन व्यभिचारस्य दुर्वारत्वात्। यदि च प्रतियोगितायाः वृत्त्यनियामकतया तेन सम्बन्धेन समवायवत्त्वरूपसमवेतत्वाप्रसिद्ध्या तत्र व्यभिचारस्या-प्रसक्तिरित्युच्यते तदा विषयताया अपि वृत्त्यनियामकतया तेन सम्बन्धेन प्रमावत्त्वरूपप्रमेययत्वासिद्ध्या तत्र व्यभिचाराभावेन हेतौ व्यतिरेकित्वे सतीति विशेषणदानवैयर्थ्यस्य दुर्वारत्वात्।[11] इति।

उपसंहृतिः-अत्र प्रबन्धे सादृश्यस्यातिरिक्तपदार्थत्वं मीमांसक-सम्मतम् इति दिनकरीमतं यत् प्रभाकृता भ्रममूलकत्वेन तिरस्कृतं तत्सविशदं निरूप्य प्रभाकृन्मतमेव भ्रममूलकमिति सयुक्ति उद्धृतिपुरस्सरं प्रतिपादितम्। किञ्च, टीकाकारयोरनयोर्दिनकरीकारमतं श्रेय इति दर्शितम्। तथा च, सादृश्यस्यातिरिक्तपदार्थत्वानुमाने दिनकरीप्रभाम-ञ्जूषाणां समीक्षात्मकमध्ययनं विहितम्। तत्र सादृश्यं क्लृप्तसप्त-पदार्थातिरिक्तम्, षड्भावानन्तर्भूतत्वे सति अभावानन्तर्भूतत्वादित्यनु-मानस्थहेतुघटकीभूतस्य सत्यन्तभागस्य पक्षे सादृश्ये असिद्धिवारकम् अनुमानं हि सादृश्यं षड्भावानन्तर्भूतम् सामान्येतरवृत्तित्वे सति सामान्यवृत्तित्वात्, गगनाभाववदिति। अस्य चानुमानस्य हेतौ

सामान्येतरवृत्तित्वे सतीति भागस्यानुपदानात्सामान्यत्वे इत्यत्र प्रमेयान्तर्भाविण व्यभिचारमाशङ्क्य व्यतिरेकित्वे सति इति विशेषणं योज्यमिति महादेवाभिप्रायः। परं प्रमेयत्वस्य प्रमाविषयत्वस्वरूपस्य विषयभेदात् भिन्नत्वाद् एकस्मिन् प्रमेयत्वे सामान्येतरवृत्तित्व-सामान्यवृत्तित्वोभयवत्त्वात्मकहेतोरभावान्न व्यभिचारसन्देहलेश इति प्रभाकृन्नय इति तन्मतं सयुक्ति प्रतिपादितम्। इत्थमन्येषु अपि विषयेषु दिनकरीप्रभामञ्जूषाणां मतवैमत्यं लभते। परं बन्धविस्तारभियात्र नोल्लिख्यते तदिति शिवम्।

**सहायकग्रन्थाः**


- न्यायपञ्चाननः, विश्वनाथः। कारिकावली (प्रभा-मञ्जूषा-दिनकरीय-रामरुद्रीय-गङ्गारामीय-सहिता)। सम्पा. शङ्कररामशास्त्री, वाराणसीः चौखम्बा-संस्कृत-प्रतिष्ठानम्, 2016 (पुनर्मुद्रणम्)।
- न्यायपञ्चाननः, विश्वनाथः। कारिकावली (मुक्तावली-दिनकरी-रामरुद्रीसनाथिता)। सम्पा. आत्मारामशर्मा, वाराणसीः चौखम्बा-संस्कृत-सिरिज्-आफिस्, 2012.
- न्यायपञ्चाननः, विश्वनाथः। न्यायसिद्धान्तमुक्तावली (दिनकरी-हिन्दीव्याख्यासमेता)। सम्पा. राजारामशुक्लः, शिमलाः इन्डियान्-इन्स्टिटिउट्-अव्-आड्भान्स्ड्-स्टाडिज्, 2015 (प्रथम-प्रकाशः)।
- न्यायपञ्चाननः, विश्वनाथः। न्यायसिद्धान्तमुक्तावली (मुक्तावलीसंग्रहसहिता)। सम्पा. पञ्चाननशास्त्री, कलिकाताः महाबोधि-बुक्-एजेन्सिः, 2016 (पुनर्मुद्रणम्)।
- न्यायपञ्चाननः, विश्वनाथः। न्यायसिद्धान्तमुक्तावली। सम्पा. श्रीकृष्णवल्लभाचार्यः, वाराणसीः चौखम्बा-संस्कृत-प्रतिष्ठानम्, 2014 (द्वितीयप्रकाशः)।
- न्यायपञ्चाननः, विश्वनाथः। भाषापरिच्छेदः। सम्पा. आशुतोषन्यायाचार्य्यः, कलिकाताः विजयन, 1992.
- शालिकनाथः, प्रकरणपञ्चिका। सम्पा. पी.टी.ए. सुब्रह्मण्य-शास्त्री, वनारसः काशी-हिन्दु-विश्वविद्यालयः, 1961.


**सन्दर्भाः**

1 द्वन्यायकुसुमाञ्जलौ, द्वितीयाध्याये कारिका 3

2 न्यायसिद्धान्तमुक्तावल्यां, कारिका 2

3 श्रीकृष्णवल्लभाचार्यसम्पादितायां न्यायसिद्धान्तमुक्तावल्यां 24-26 पृष्ठे

4 पञ्चाननभट्टाचार्य्यशास्त्रिसम्पादिते भाषापरिच्छेदे 19-20 पृष्ठे

5 श्रीशङ्कररामशास्त्रिसम्पादितायां कारिकावल्यां 54पृष्ठे

6 तत्रैव

7 सुब्रह्मणशास्त्रिसम्पादितायां प्रकरणपञ्चिकायां 266-268 पृष्ठे

8 पञ्चाननभट्टाचार्य्यशास्त्रिसम्पादिते भाषापरिच्छेदे 22-23पृष्ठे

9 श्रीशङ्कररामशास्त्रिसम्पादितायां कारिकावल्यां 58-59 पृष्ठे

10 तत्रैव, 58 पृष्ठे

11 तत्रैव

***सहायकाध्यापकः***
***संस्कृतविभागस्य, चन्दननगरमहाविद्यालयस्य***

ISSN 2456-3420

# तिङन्तप्रकरणे विकरणप्रत्ययानां महत्त्वम्

डॉ. प्रीतिलक्ष्मी स्वाईं

**शोधसारः**

संस्कृतभाषायाः सुरक्षार्थं व्याकरणस्य ज्ञानम् अतीव गुरुत्वपूर्णम्। व्याकरणं विना अस्या भाषाया अवबोधनम् असंपूर्णम्। भर्तृहरिणा सुष्ठुः प्रतिपादितम्–

**इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम्।**

**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ।।( 1.16 )**

पाणिनिविरचितायाम् अष्टाध्याय्यां विविधप्रकरणेषु तिङन्तप्रकरणमन्यतमम् ।तत्र विकरणप्रत्ययानां योगदानम् सर्वाधिकं महत्त्वपूर्णम्।प्रकरणेऽस्मिन् धातोः(3.1.91), लस्य(3.4.77), प्रत्ययः(3.1.1) तथा परश्च(3.1.2) इत्येते अधिकाराः प्रमुखरूपेण विराजन्ते। अस्माद्विज्ञायते यत् एते प्रत्यया धातोः परं लकारस्य स्थाने भवन्ति। अत्र अष्टादश लादेशाः, दश गणाः, दश लकाराश्च विद्यन्ते।विकरणप्रत्यया धातुभ्यः अनन्तरं विधीयन्ते। प्रथमे लकाराः आगच्छन्ति, ततः परं लकारमनुसृत्य विकरणप्रत्यया भवन्ति। एते प्रत्ययाः स्यतासी लृलुटोः(3.1.33) इत्यतः लिङ्याशिष्यङ्(3.1.86) पर्यन्तमस्ति।सर्वे लकाराः प्रत्ययाश्च एकार्थं न प्रकाशयन्ति। पदार्थस्य अवबोधने ज्ञाने च एते प्रत्ययाः अद्वितीयाः। व्याकरणप्रक्रियायां एतेषां विकरणप्रत्ययानां गौरवं,महत्त्वं,वैशिष्ट्यम्, अर्थावबोधने योगदानञ्च प्रभृतिषु विविधविषयेषु सविस्तरम् आलोचना पत्रेऽस्मिन् क्रियते।

प्रमुखशब्दाः लकारः,धातुः, प्रत्ययः, सूत्रम्, विकरणः ।

**उपोद्घातः**

संस्कृतभाषायाः सुशिक्षणाय व्याकरणम् अनिवार्यम्। व्याकरणं विना शब्दसाधुत्वं नैव संभवति। वाक्यपदीयकारेण भर्तृहरिणा यथार्थमेव प्रोक्तम् यत्–卐तस्मान्निबध्यते शिष्टैः साधुत्वविषया स्मृतिः卐(1.29)। पाणिनिव्याकरणे प्रत्ययानां वैशिष्ट्यं सर्वाधिकम्। प्रतीयते विधीयते विशिष्टार्थः अनेनेति प्रत्ययः।प्रतिपूर्वकम् इण् धातोः भावकरणादौ अच् प्रत्ययेन निष्पन्नः प्रत्ययशब्दो नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः(3.1.134) सूत्रेण। अष्टाध्याय्याः तृतीयचतुर्थपञ्चमेषु अध्यायेषु प्रत्यया वर्णिताः। प्रत्ययानां सप्त भेदा वर्तन्ते। ते यथा– सनादिप्रत्ययाः, विकरणप्रत्ययाः, तिङ्प्रत्ययाः, कृत्प्रत्ययाः, सुप्प्रत्ययाः, स्त्रीप्रत्ययाः तद्धितप्रत्ययाश्च।

संस्कृतव्याकरणस्य प्राणस्वरूपं भवति तिङन्तप्रकरणम्। प्रकरणेऽस्मिन् दश गणा विद्यन्ते।गण इति धातुसमूहः। यथा, मनोरमायां कथितम्–

**भ्वाद्यदादिजुहोत्यादिदिवादिः स्वादिरेव च ।**

**तुदारुधातनुक्र्यादिश्चुरादिश्च गणा दश ।।**[1]

भ्वादिगणः, अदादिगणः, जुहोत्यादिगणः, दिवादिगणः, स्वादिगणः, तुदादिगणः, रुधादिगणः, तनादिगणः, क्र्यादिगणः, चुरादिगणश्चेति दश गणाः। प्रत्येकगणे लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्लिङ् लुङ्लृङ्चेति दश लकाराः सन्ति। एषु दशसु लकारेषु 'ल' कारस्य उच्चारणसामर्थ्याद् अथवा लस्य(3.4.77) अधिकारसामर्थ्यात् लशक्वतद्धिते (1.3.8) इत्यनेन इत् संज्ञा न भवति। 'ल' कारमात्रम् अवशिष्टत्वात् 'लकार' इत्युच्यते। अनुबन्धभेदत्वाद् दश लकाराः भवन्ति। एषु आद्य षट् टितः, चत्वारः ङितः। एते लकाराः सकर्मकेभ्यः धातुभ्यः कर्मणि कर्तरि च स्युः तथा अकर्मकेभ्यः धातुभ्यः भावे कर्तरि च भवेयुः[2]। तिप्–तस्–झि–सिप्–थस्–थ–मिप्–वस्–मस्–त–आताम्–झ–थास्–आथाम्–ध्वम्–इट्–वहि–महिङ् इत्येते अष्टादश लादेशाः स्युः तिप्–तस्–झि...... (3.4.78) सूत्रानुसारेण। धातोः(3.1.91), लस्य (3.4.77), प्रत्ययः (3.1.1) तथा परश्च (3.1.2) अधिकारेभ्यः एते सर्वे तिङ्प्रत्यया लकारस्य स्थाने धातुभ्यः परं भवन्ति। एते लादेशाः साधारणतः परस्मैपदसंज्ञाः स्युः लः परस्मैपदम् (1.4.98) सूत्रेण एवं सूत्रस्यास्य अपवादसूत्रैः आत्मनेपदसंज्ञा भवति, यथा–तङानावात्मनेपदम् (1.4.99), अनुदात्तङित आत्मनेपदम् (1.3.12), स्वरितञितः कर्त्रभिप्राये क्रियाफले (1.3.72)। आत्मनेपदविषयाभावात् धातोः कर्तरि परस्मैपदं स्यात् शेषात्कर्तरि परस्मैपदम् (1.3.78) इति सूत्रेण। तिङउभयोः पदयोः त्रयस्त्रिकाः क्रमशः प्रथममध्यमोत्तमसंज्ञकाः भवन्ति तिङस्त्रीणि.....(1.4.100) इत्यनेन सूत्रेण। पुनः एतानि तिङस्त्रीणि त्रीणि वचनानि प्रत्येकम् क्रमेण एकवचन–द्विवचन–बहुवचनसंज्ञकाः भवन्ति तान्येकवचनद्विवचन ..... (1.4.102) इति सूत्रेण। अपिच युष्मद्युपपदे....(1.4.104), अस्मद्युत्तमः (1.4.106) एवं शेषे प्रथमः(1.4.107) इत्येतैः सूत्रैः क्रमशः मध्यमपुरुष उत्तमपुरुषः प्रथमपुरुषश्च विधीयन्ते। प्रत्ययाः सार्वधातुकार्धधातुकभेदेन द्विधा। तिङ्शित्सार्वधातुकम् (3.4.113) इत्यनेन सूत्रेण सार्वधातुकसंज्ञा भवति। तिङ्शिद्भ्यो भिन्नो धातोर्विहिताः प्रत्यया एव आर्धधातुकसंज्ञका भवन्ति आर्धधातुकं शेषः(3.4.114) इति सूत्रेण।

धातोः तिङ्प्रत्यये परे शबादयो विकरणप्रत्ययाः स्युः। अष्टाध्याय्यां विकरणप्रत्ययाः 3.1.33 सूत्रतः 3.1.86 सूत्रपर्यन्तं विस्तृता वर्तन्ते। एतानि सर्वाणि सूत्राणि धातोरेकाचो हलादेः क्रियासमभिहारे यङ् (3.1.22) धात्वधिकारेऽस्मिन् वर्तन्ते। फलत एते सर्वे विकरणप्रत्ययाः केवलं धातुभ्यः परं विधीयन्ते। अत्र प्रक्रियायां प्रथमं लकारः विधीयते, तदनन्तरं विकरणप्रत्ययः लकारानुसारेण लकारधात्वोर्मध्ये विधीयते। अतः धातुना सह विकरणप्रत्ययलकारप्रत्ययाभ्यां योगेन क्रियापदं

जायते ।लकारविकरणप्रत्ययास्तथा गणविकरणप्रत्यया भेदेन द्विधा विकरणप्रत्यया:। लकारविकरणप्रत्यया लकारविशिष्टा भवन्ति ।उदाहरणम्-स्य,तास् इत्यादय:। एते दशसंख्यका: सन्ति। गणविकरणप्रत्यया धातुविशिष्टा वर्तन्ते। उदाहरणम्- शप्, श्ना, श्यन् प्रभृतय:। एते एकादश भवन्ति।

दशसु लकारेषु चत्वारो लकारा यथा लट्, लोट्, लङ् विधिलिङ् सदा सार्वधातुकलकारा:। अन्ये षट्लकारा: यथा- लिट्, लुट्, लृट्, लुङ् लृङ् आशीर्लिङ् सर्वदा आर्द्धधातुकलकारा:। परन्तु वेदेषु सर्वे लकारा उभयविधा परिदृश्यते छन्दस्युभयथा (3.4.117) सूत्रानुसारेण। गणविकरणं सार्वधातुके लकारे परे भवन्ति। लकारविकरणं तु आर्धधातुकलकारेषु जायते। दश लकारविकरणप्रत्यया: 3.1.33 सूत्रत आरभ्य 3.1.66 पर्यन्तं वर्तन्ते। एते यथा- स्य, तास्, सिप्, आम्, च्लि,सिच्, क्स, चङ् अङ् चिण् च। एकादश गणविकरणप्रत्यया: 3.1.67 सूत्रादारभ्य 3.1.86 सूत्रं यावत् सन्ति। एते यथा- यक्, शप्, श्यन्, श्नु, श, श्नम्, उ, श्ना, शानच्, शायच्, अङ् च। अधुना दश लकारविकरणप्रत्ययानां विषये आलोचयिष्याम:।

■ स्य एवं तास्- स्यतासी लृलुटो:(3.1.33) सूत्रानुसारेण लृलुटो: परतो धातो: स्यतासी प्रत्ययौ स्तो ।सूत्रेऽस्मिन् 'लृ' इत्यनेन लृङ्लकारस्य तथा लृट्लकारस्य ग्रहणम् भवति। अनेन सूत्रेण एतयोर्लकारयो: स्य विकरणो विधीयते एवं लुट् लकारस्य तास् विकरण: क्रियते यथासंख्यमनुदेश: समानाम्(1.3.10) परिभाषानुसारेण। एतौ प्रत्ययौ आर्धधातुकसंज्ञ: प्राप्नुत: आर्धधातुकं शेष:(3.4.114) सूत्रेण। एतयो: इडागमोऽपि स्याद् आर्धधातुकस्येड्वलादे: (7.3.35) सुत्रेण वलादेरार्धधातुकत्वात् । आर्धधातुकत्वात् इगन्ताङ्गस्य गुणो भवति सार्वधातुकार्धधातुकयो:(7.3.84) सूत्रेण ।उदाहरणं भवति- लृट्लकारे भविष्यति, लृङ्लकारे अभविष्यत्, लुट्लकारे भविता च।

- सिप्- धातो: परं सिप् प्रत्ययो बहुलं भवति लेटि परत: सिब्बहुलं लेटि(3.1.34) इति सूत्रेण। सिप्प्रत्ययस्य इकार: उच्चारणार्थक: तथा पकार: स्वरार्थ:। उदाहरणं यथा- जोषिषत्।
- आम्- आम् प्रत्यय: कास्धातो: प्रत्ययान्तेभ्यश्च लिटि परत: भवति न तु मन्त्रे कास्प्रत्ययादाममन्त्रे लिटि(3.1.35) इति सूत्रेण। प्रत्ययस्यास्य अवधि: अस्मात् सूत्रात् अभ्युत्सादयां.... (3.1.42) पर्यन्तम्। उदाहरणं यथा-भावयांबभूव।
- च्लि एवं सिच्- लुङि परे धातो: 'च्लि' इति विकरणप्रत्ययो जायते च्लि लुङि(3.1.43) सूत्रेण। 'च्लि' प्रत्ययेन शबाद्यपवाद: जायते। प्रत्ययस्यास्य इकार: उच्चारणार्थ: तथा चकारस्य चुटू(1.3.7) सूत्रेण इत्संज्ञा भवति। च्ले: सिच्(3.1.44) इत्यनेन 'च्लि' विकरणस्य 'सिच' आदेश: भवति। सिच: चकारस्य हलन्त्यम्(1.3.3) सूत्रेण तथा इकारस्य उपदेशेऽजनुनासिक इत्(1.3.2) सूत्रेण इत्संज्ञा भूत्वा तस्य लोप:(1.3.9)सूत्रेण तयो: लोपो भवति, 'स' कार एव अवशिष्यते। अत्र सिच: इदित्त्वस्य तु अमंस्त(अमन् +स् +त) इत्यत्र सार्वधातुकमपित्(1.2.4) सूत्रेण तकार:(ङित्) परत्वादपि अनिदितां हल उपधाया: क्ङिति(6.4.24) इत्युपधालोपस्याप्रवृत्ति: (उपधानकारस्य न लोप:) एव प्रयोजनम्। चित्त्वस्य प्रयोजनं तु अन्तोदात्त: चित:(6.1.157) सूत्रेण। उदाहरणं यथा- अकार्षीत्।
- क्स:- शलन्तो यो धातुरिगुपधम् तस्मात्परस्य अनिटश्चले: क्सादेशो भवति शल इगुपधादनिट: क्स:(3.1.45) इति सूत्रेण। उदाहरणं यथा-अघृक्षत। श्लिष आलिङ्गने (3.1.45) सूत्रेणापि आलिङ्गनार्थे श्लिष्-धातो: च्लि-प्रत्ययस्य क्स-आदेश: स्यात्।
- चङ्- सिजपवादरूपेण चङ्विधीयते। ण्यन्तात् श्र्यादिभ्यश्च च्ले: चङादेशो भवति कर्त्रर्थे लुङि परे णिश्रिद्रुस्रुभ्य: कर्तरि चङ् (3.1.48) इत्यनेन सूत्रेण। उदाहरणं यथा- अबीभवत्।
- अङ्- अष्टाध्याय्याम् अङ्-प्रत्यय: (3.1.52) सूत्रादारभ्य: (3.1.59) सूत्रं यावत् कथित:। असु(क्षेपणे), वच् (परिभाषणे), ख्या (प्रकथने)- एभ्य: परस्य च्लि-प्रत्ययस्य अङ्-आदेशो भवति अस्यतिवक्तिख्यातिभ्योऽङ्(3.1.52) सूत्रेण। उदाहरणं यथा-अख्यत।
- चिण्- पद गतौ इति धातो: परस्य च्ले: चिणादेशो भवति तशब्दे परे चिण् ते पद:(3.1.60) सूत्रेण। उदाहरणं यथा-अपादि। अत्र अपद्+ च्लि+ त इत्यवस्थायां पद्-धातो: परं च्ले: इत्यस्य चिणादेशो, अत उपधाया:(7.2.116) इत्यनेन उपधावृद्धिस्तथा चिणो लुक् (6.4.104) सूत्रेण तशब्दस्य लोपे अपादि इति रूपं प्राप्यते।

इदानीं एकादश गणविकरणप्रत्ययानां विषये कथयिष्याम:।

- यक्- सर्वेभ्य: धातुभ्यो यक् स्याद् भाववाच्ये कर्मवाच्ये च सार्वधातुके परे सार्वधातुके यक्(3.1.67) सूत्रेण। यक्-प्रत्ययस्य क-कार इत्संज्ञक:, केवलं यकार: शिष्यते । कित्त्वस्य प्रयोजनं तु गुणवृद्धिनिषेध: क्ङिति च(1.1.5) इत्यनेन सूत्रेण तथा सम्प्रसारणम् वचिस्वपियजादीनां किति(6.1.15) इत्यनेन सूत्रेण। उदाहरणं यथा- पठ्यते।
- शप्- कर्तरि सार्वधातुके परे धातो: शप् स्यात् कर्तरि शप्(3.1.68) सूत्रेण । शप: शकारपकारौ लशक्वतद्धिते(1.3.8), हलन्त्यम्(1.3.3) इत्याभ्यां चेत्संज्ञकौ। ततश्च एतयो: तस्य लोप:(1.3.9) सूत्रेण लोपे अकारमात्रं शिष्यते। शप: शित्त्वात् तिङ्शित् सार्वधातुकम्(3.4.113) इत्यनेन सार्वधातुकसंज्ञा। फलत: इगन्ताङ्गस्य गुण: स्यात् सार्वधातुकार्धधातुकयो: (7.3.84) इत्यनेन। उदाहरणं यथा- भवति।

ISSN 2456-3420

- श्यन्– कर्त्रर्थे सार्वधातुके परे दिवादिगणेभ्यो धातुभ्यः श्यन् भवति दिवादिभ्यः श्यन् (3.1.69) सूत्रेण। अत्र शकारनकारावितौ। यकारमात्रं शिष्यते। शकारानुबन्धत्वात् सार्वधातुकसंज्ञा तथा नकारानुबन्धेन आद्युदात्तस्वरः ञ्नित्यादिर्नित्यम् (6.1.181) सूत्रेण। श्यनः सार्वधातुकसंज्ञकत्वात् लघूपधगुणोऽपि स्यात् परन्तु सार्वधातुकमपित्(1.2.4) सूत्रेण ङित्वात् तस्य निषेधः। श्यनः अपित्त्वेन ङित्वान्न गुणः।उदाहरणं यथा–दीव्यति।
- श्नुः– कर्त्रर्थे सार्वधातुके परे स्वादिगणेभ्यो धातुभ्यः श्नुप्रत्ययो भवति स्वादिभ्यः श्नुः(3.1.73) सूत्रेण।एभ्यो धातुभ्यः लट्–लोट्–लङ्–विधिलिङ् इत्येतेषु चतुर्षु सार्वधातुकलकारेषु शपः स्थाने श्नुप्रत्ययः स्यात। श्नुप्रत्ययस्य शकारानुबन्धत्वात् सार्वधातुकसंज्ञा परन्तु अपित् सार्वधातुकत्वात् सार्वधातुकमपित्(1.2.4) सूत्रेण ङित्, अतः गुणनिषेधः।केवलं नुमात्रं शिष्यते ।उदाहरणं यथा– सुनुतः।
- शः– कर्त्रर्थे सार्वधातुके परे तुदादिगणेभ्यो धातुभ्यः शः प्रत्ययो भवति तुदादिभ्यः शः(3.1.77) सूत्रेण। अत्र शकारस्य लशक्वतद्धिते(1.3.8) सूत्रेण इत्संज्ञा, अकारमात्रं शिष्यते।शकारानुबन्धत्वात् सार्वधातुकसंज्ञा परंतु शप्रत्ययस्य अपित्त्वात् सार्वधातुकमपित्(1.2.4) इति ङित्वान्न लघूपधगुणः। उदाहरणं यथा– तुदति।
- श्नम्– कर्त्रर्थे सार्वधातुके परे रुधादिभ्यो धातुभ्यः श्नम्प्रत्ययो भवति रुधादिभ्यः श्नम्(3.1.78) सूत्रेण। श्नम्–प्रत्यये शमावितौ। नकारमात्रं शिष्यते। मित्त्वस्य फलं तु मिदचोऽन्त्यात्परः(1.1.47) सूत्रेण अन्त्यादचः परः विधीयते(रुनध्+ ति)। प्रत्ययत्वात् शकारस्येत्संज्ञा। अत्र शकारनिर्देशस्तु श्नसोरल्लोपः(6.4.111)3, श्नान्नलोपः(6.4.23)4 इति विशेषणार्थः। न तु सार्वधातुकसंज्ञार्थः, फलाभावात। ङित्वाद् गुणनिषेधोऽपि न शङ्क्यम्, श्नमः पूर्वस्य इगन्तस्य अङ्गत्वाभावात। अतः सार्वधातुके ङिति(तस्) परे श्नसोरल्लोपः सूत्रेण श्नमः अकारस्य लोप एव प्रयोजनम्। उदाहरणं यथा– रुणद्धि,रुन्धः।
- उः–कर्त्रर्थे सार्वधातुके तनादिभ्यः कृञश्च उप्रत्ययो भवति तनादिकृञ्भ्य उः(3.1.79) सूत्रेण। उप्रत्ययस्य तिपमाश्रित्य गुणः(तनोति)। तसादौ तु ङित्वान्न गुणः(तनुतः)।
- श्ना– कर्त्रर्थे सार्वधातुके परे क्र्यादिभ्यः श्नाप्रत्ययो भवति क्र्यादिभ्यः श्ना(3.1.81) सूत्रेण। श्नाप्रत्ययस्य शकारस्य इत्संज्ञा लोपश्च, 'ना' मात्रं शिष्यते। शकारानुबन्धेन सार्वधातुकत्वात् ई हल्यघोः(6.4.113)5 प्रभृतीनां सूत्राणां प्रवृत्तिः। श्नाप्रत्ययस्य अपित्सार्वधातुकत्वेन ङित्वादीकारस्य न गुणः। उदाहरणं यथा– क्रीणाति।
- शानच्– हलः श्नः शानज्झौ(3.1.83) सूत्रेण हलः परस्य श्नः शानजादेशो भवति हौ परे। अत्र शकारचकारावितौ, 'आन' मात्रं शिष्यते। अनेकाल्त्वात्6 आदेशोऽयं संपूर्णरूपेण 'श्ना' इत्यस्य स्थाने भवति। स्तभ्+श्ना+हि इति स्थितौ प्रकृतसूत्रेण शानजादेशः तथा अतो हेः(6.4.105) सूत्रेण हेर्लुक्स्यात। उदाहरणम्– स्तभान।
- शायच्– छन्दसि विषये श्नः शायचादेशो भवति, शानजपि स्यात् छन्दसि शायजपि(3.1.84) सूत्रेण। अत्र शकारचकारावितौ, 'आय' इति शिष्यते। अनेकाल्त्वात् समग्रस्थाने स्यात। उदाहरणं भवति– गृभाय(ग्रह् श्ना हि, ग्रह् शायच् हि, गृह् आय, गृभ् आय/ हृग्रहोर्भश्छन्दसि इति हस्य भः)।
- अङ्– आशिषि विषये यो लिङ् अस्ति तस्मिन् परतः छन्दसि विषये धातोः अङ् प्रत्ययः स्यात् लिङ्याशिष्यङ्(3.1.86) । उदाहरणं यथा– गमेम, वोचेम।

आत्मनेपदे सर्वे प्रत्यया अपित्त्वात् ङिद्वत्त्वेन सर्वत्र गुणनिषेधो भवति।सर्वे विकरणप्रत्यया एवमेवरूपेण विशिष्टार्थानां बोधका भवन्ति। संस्कृतवाङ्मये एतेषां महत्त्वम् अनस्वीकार्यम्।

**उपसंहारः**

संस्कृतव्याकरणपारावारे तिङन्तप्रकरणस्य वाक्यरचनायां प्रमुखभूमिका वर्तते। दशलकारा धातुभ्यो भिन्नेषु अर्थेषु विधीयन्ते। यथा– वर्तमानकालिकक्रियावृत्तेर्धातोर्लट् स्यात् परंतु लिट्लकारः अनद्यतनपरोक्षभूतार्थे धातोर्विधीयते अपिच अनद्यतनभविष्यते लुट्लकारस्य प्रयोगो भवति।विविधलकारेषु विभिन्नविकरणप्रत्यया अपि विधीयन्ते।यथा– लृट्लकारे लृङ्लकारे च स्य, लुट्लकारे तास्, लेटे सिप्, लिटे आम्, लुङि च्लि एवं लुङि च्लिप्रत्ययस्य आदेशा भवन्ति– सिच्, क्स, चङ् अङ् चिण् च।विविधगणेऽपि विकरणप्रत्यया भिन्नाः। यथा– दिवादिगणे श्यन्, स्वादिगणे श्नुः, तुदादिगणे शः, रुधादिगणे श्नम्, तनादिगणे उः, क्र्यादिगणे श्ना तथा श्नाप्रत्ययस्य आदेशः शानच्, शायच् च।एते शबपवादाः। शप् तथा श प्रत्यययोः अकारमात्रं शिष्यते। मुख्यतया शपः परत्वात् गुणो भवति परंतु शप्रत्ययस्य परे न।पुनः 'वृश्चति' इत्यादौ ग्रहिज्या...(6.1.16) सूत्रेण शप्रत्ययस्य ङित्त्वात् संप्रसारणं भवति।आच्छीनद्योर्नुम्(7.1.80) सूत्रेण श–विकरणशत्रन्तानां वैकल्पिकं नुमे तुदन्ती–तुदती, नुदन्ती–नुदती इति रूपद्वयं स्यात् परंतु शप्श्यनोर्नित्यम्(7.1.81) सूत्रेण नित्यं नुमे शप्–विकरणशत्रन्तानां भवन्ती, गच्छन्ती इति रूपमेकं भवति। अपिच वैदिकप्रयोगेऽपि तयोः प्रत्यययोः स्वरविषये तारतम्यं परिलक्ष्यते।शपः पित्त्वात् अनुदात्तौ सुप्पितौ(3.1.4) सूत्रेण अनुदात्तः स्यात् परंतु शप्रत्ययः आद्युदात्तश्च(3.1.3) सूत्रेण उदात्तो भवति। व्याकरणप्रक्रियायां विविधपदसिद्धिषु एतेषां विकरणप्रत्ययानां योगदानम् अतीव प्रणिधानयोग्यम्। एतेषां व्याकरणमहाम्बुधौ वास्तविकं सविशेषणेन प्रयोजनं वर्तते।

ISSN 2456-3420

## ग्रन्थपञ्जी

**संस्कृतग्रन्थाः**

1. झा,नरेश,अष्टाध्यायी(शान्ति संस्कृत-हिन्दीव्याख्याविभूषिता), चौखम्बा सुरभारती प्रकाशन,वाराणसी, 2017।
2. त्रिपाठि, बलभद्र, काशिकावृत्तिसारः, उत्तरार्द्धभागः, शाकुन्तल मुद्रणालयः, इलाहाबाद, 1995।
3. वागीशः,सत्यानन्दवेद,पाणिनीयशब्दानुशासनम्, द्वितीयं संस्करणम्,भगवती लेजर प्रिंट्स्,नई दिल्ली,2003।
4. शर्मा,गिरिधरः परमेश्वरानन्दश्च, वैयाकरणसिद्धान्तकौमुदी (बालमनोरमा-तत्त्वबोधिनीसहिता), तृतीयो भागः, मोतिलाल वनारसीदास, दिल्ली, पुनर्मुद्रणम्-2005।
5. शास्त्री,सदाशिव,लघुसिद्धान्तकौमुदी(सुधाख्यया टीकया संवलिता), चौखम्बा संस्कृत सीरीज आफिस,वाराणसी, पुनर्मुद्रणम्-2001।

**आङ्गलग्रन्थाः**

1. Apte, Vaman Shivram, The Practical Sanskrit English Dictionary, Motilal Banarasidass, Delhi, Fourth Edition, 1965.
2. Williams, Sir Monier Monier, A Sanskrit-English Dictionary, Motilal Banarasidass, Delhi, 1899.

**हिन्दीग्रन्थाः**

1. दीक्षित, पुष्पा,अष्टाध्यायी सहजबोध,(प्रथम भाग, सार्वधातुक खण्ड), प्रतिभा प्रकाशन, दिल्ली, द्वितीय संस्करण-2007।
2. दीक्षित, पुष्पा,अष्टाध्यायी सहजबोध,( द्वितीय भाग, आर्धधातुक खण्ड), प्रतिभा प्रकाशन, दिल्ली, द्वितीय संस्करण-2007।
3. शास्त्री, भीमसेन, लघुसिद्धान्तकौमुदी-भैमीव्याख्या, (द्वितीय भाग), भैमी प्रकाशन, दिल्ली, सप्तम संस्करण-2014।

## पादटिप्पणी

1. शब्दकल्पद्रुमे गणशब्दे
2. लः कर्मणि च भावे चाऽकर्मकेभ्यः(3.4.69)
3. श्नस्यास्तेश्चाकारस्य लोपः स्यात्सार्वधातुके क्ङिति। (सि.कौ.)
4. श्नमः परस्य नस्य लोपः स्यात। (सि.कौ.)
5. श्नाभ्यस्तयोरात ईत्स्यात्सार्वधातुके क्ङिति हलि, न तु घुसंज्ञकस्य। (सि.कौ.)
6. अनेकाल्शित्सर्वस्य(1.1.55)- अनेकाल् य आदेशः शित् च, स सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति। (काशिका)

*सहाध्यापिका, संस्कृतविभागः, भाषा-भवनम्, विश्वभारती, शान्तिनिकेतनम्, वीरभूम्, पश्चिमवङ्गः*

ISSN 2456-3420

# वैदिकगृह्यसूत्रेषु दार्शनिकतत्त्वचिन्तनम्

अचिन्त्यकुमारपालः

## ■ भूमिका

संस्कारास्तु केषाञ्चित्कर्मणां समूहाः एव। आर्यजनानामर्जितज्ञानानुभवविश्वासानां प्रकटितरूपाः। निखिलविश्वस्य धाता सृष्टिकर्ता मानवानां प्रकृतिरेव।तेन सह मानवानां ऐक्यसम्पादनमेव संस्काराणां मूलम्।वैदिकजनानां विश्वासः आसीद् यद् ईश्वरप्राप्त्यर्थं शरीरस्य तथा मनसः परिशुद्धिस्तथा रक्षणमावश्यकम्। तदर्थमेव संस्काराणामावश्यकता। पार्थिवपरिशुद्धिं विना मानसिकपरिशुद्धिः न भवति। किञ्च, मानसिकपरिशुद्धिमन्तरेनाध्यात्मिकी उपलब्धिः न सम्भवति।

संस्करोतीति संस्कारः।सम्पूर्वकात्कृधातोः घञ्प्रत्यये संस्कारशब्दोऽयं निष्पद्यते।मीमांसकानां नये संस्कारस्यार्थस्तु प्रोक्षणादिः। तथाह्याम्नातं वाचस्पत्यबृहदाभिधाने–

**'ब्रीह्यादेश्च यज्ञाङ्गताप्रदानाय वैदिकमार्गेण प्रोक्षणादिः'।**

परन्तु गृह्यसूत्रेषु उल्लिखितार्थस्तु ब्रीह्यादिवज्जनानां साधारणानां परमात्माङ्गत्वप्रदानाय वैदिकमार्गेण प्रोक्षणादिः। संस्कारस्तु आत्मशरीरान्यतरनिष्ठोऽविहितक्रियाजन्योऽतिशयविशेषः। गृह्यसूत्रेषु संस्काराणां संख्याविषये मतवैविध्यं दरीदृश्यते। गृह्यसूत्रेषु साकल्येन चत्वारिंशत्संस्काराणामुल्लेखः प्राप्यते। ते तु द्विधा विभज्यते शारीरयज्ञभेदेन। वैखानसगृह्यसूत्रानुसारमष्टादशसंख्यकाः शारीरसंस्कारास्तथा द्वाविंशतिसख्यकाः यज्ञाः। तेषु ब्रह्मादयः पञ्च महायज्ञाः साकल्येन एकयज्ञरूपेण गृह्यन्ते, स्थालीपाकादयः सप्त पाकयज्ञाः, अग्न्याधेयादयः सप्त हविर्यज्ञाः तथा अग्निष्टोमादयः सप्त सोमयज्ञाः।शारीरसंस्कारेष्वष्टादशसु षोडश एव अतिप्रसिद्धाः सर्वजनग्राह्याः। ते चगर्भाधान-पुंसवन-सीमन्तोन्नयन-जातकर्म-नामकरण-निष्क्रमणान्नप्राशन-चूडाकर्म-कर्णवेध-विद्यारम्भोपनयन-वेदारम्भ-केशान्त-समावर्तन-विवाहान्त्येष्टयः।

प्राचीनगृह्यसूत्रेषु दार्शनिकतत्त्वानि नैकानि प्राप्यन्ते। तत्राध्यात्मिकादिचिन्तनेन सह सामाजिकादिचिन्तनमपि परिस्फुटति। अधस्तेषां वर्णनं प्रदीयते।

## ■ गृह्यसूत्रेषु आध्यात्मिकचिन्तनम्

गृह्यसूत्रेषु न केवलं शारीरसंस्काराणां वर्णनं प्राप्यते अपि तु तानाधारीकृत्य आध्यात्मिकचिन्तनमपि प्रकाशमेति। यदा कर्मणां वैविध्यस्य तथा जटिलतायाः आबिर्भावो जातस्तदा प्राचीनार्यजनाः मोक्षस्य त्रिविधाः मार्गाः परिकल्पिताः। ते च- कर्ममार्गः, उपासनमार्गस्तथा ज्ञानमार्गः। कर्ममार्गान्तर्गताः हि संस्काराः। ते तु उपासनमार्गस्य तथा ज्ञानमार्गस्य आदिमसोपानमार्गरूपः। संस्कारादिकर्मणा शरीरशुद्धेरनन्तरमेव उपासनादिना चित्तशुद्धिः सम्भवति। किञ्च, चित्तशद्धिमन्तरेण मोक्षप्राप्तिस्तु न सम्भवति। एतेन स्पष्टीभवति यत्संस्कारास्तु आध्यात्मिकोपलब्धेः प्राथमिकप्रशिक्षण-पद्धतयः[1]। परवर्तिनि युगे योगशास्त्रेऽपि एवं ज्ञानभक्तिकर्मभेदेनत्रिविधाः मार्गाः कल्पिताः।

किञ्च, वेदान्तादिशास्त्रे यथा पार्थिवजीवनस्य दुःखपरिणामो वर्णितस्तथा गृह्यसूत्रे तु नैवोपलभ्यते, अपि तु तत्र पार्थिवजीवनस्य सुखकरं वर्णनं परिस्फुटति। तत्र दीर्घजीवनाय तथा सुस्वास्थ्याय स्तुतिः दरीदृश्यते[2]। गृह्यसूत्रेषु वर्णिताः संस्काराः यज्ञाश्च प्राधान्येन धर्मार्थकामानां पुरुषार्थानां प्राप्त्यर्थमेव वर्णिताः[3]। काठकगृह्यसूत्रानुसारं शूलगवानुष्ठानेन सर्वेषां कामानां पूर्तिः भवति[4]। तस्मात् प्रायः सर्वेषु एव अनुष्ठानेषु धनपुत्रादीनां तथायुषस्य प्रार्थना विहिता[5]। एतेषु संस्काराद्यनुष्ठानेषु व्यवहृतानां मन्त्राणां पर्यालोचनेनैव तत्स्पष्टीभवति।

## ■ गृह्यसूत्रेषु अद्वैतचिन्तनम्

गृह्यसूत्रेषु स्पष्टतस्तु मोक्षतत्त्वस्योल्लेखो न प्राप्यते। परन्तु देहान्तरवादस्य किञ्चिदाभासो दरीदृश्यते। परन्तु प्राचीनगृह्यसूत्राणां पर्यालोचनेनैतज्ज्ञायते यत्तत्कालीनाः जनाः स्वर्गादिलोकानामस्तित्व-विषये विश्वस्ताः आसन्। आश्वलायनगृह्यसूत्रे प्रेतस्यात्मनः उच्चतर-लोकप्राप्त्युपायाः आलोचिताः[6]। प्राचीनार्यसाहित्ये यथा वेदादिग्रन्थे एते लोकाः पुनः पुनः उल्लिखिताः।गोभिलगृह्यसूत्रे श्रद्धादिकर्मानुष्ठाने पितृपितामहादीनां वासस्थानरूपेण एतेषां लोकानामुल्लेखः प्राप्यते–''स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं निदध्यात्, स्वधा पितृभ्योऽन्तरीक्षसद्भ इति द्वितीयं, स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम्''[7]इति। कौशिके सूत्रे सप्तर्षिलोकप्राप्त्यर्थं प्रार्थना विहिता[8]। वैखानसगृह्यसूत्रे प्रेतस्यात्मनो द्विविधा गतिरुक्ता–'प्राप्ते प्रयाणकाले शुक्लमहो मासाः षडुत्तरायणमग्निर्ज्योतिरनेन पथा ब्रह्मपदमपुनरा-वृत्त्यभ्येति, धूमः कृष्णो रात्रिः मासाः षट् दक्षिणायणं चान्द्रमसमेत-ज्ज्योतिः प्राप्य निवर्तत इति गती चोभे विज्ञाय शान्तिं ज्योतिष्मतीं जपति''[9] इति। एकेन मार्गेण ब्रह्मलोकप्राप्तिर्भवति यतः पुनर्न निवर्तते, अपरेण चन्द्रलोकप्राप्तिः यतः पुनरावर्ततेइति स्पष्टीभवति। गीतायामपि उक्तं–

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्ययावर्तते पुनः।।**[10] इति।

अत्रोक्ता ब्रह्मलोकप्राप्तिरेव ब्रह्मप्राप्तिरिति प्रतिभाति यतः स मृत्योः बन्धनाद्विमुक्तो भवति। गीतायामस्य पुनरावृत्तिर्दृश्यते–

**अग्निर्ज्योतिरहः शुक्लःषण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ।।**
**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायणम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते।।**[11] इति।

विषयेऽस्मिन् वेदान्तवचनमपि प्रमाणम्–'स तु तत्पदमाप्नोति यस्माद्भूयो न जायते'[12] इति। किञ्च, मुण्डकोपनिषदि–'ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे'[13] इति। आत्मनः पुनरावर्तनेन गृह्यसूत्रेषु न्यायवैशेषिकसम्मतमात्मनो नित्यत्वमपि भवति प्रतिपादितम्। वैखानसगृह्यसूत्रे ब्रह्मलोकप्राप्तेरपरमुपायमप्युक्तं पञ्चमप्रश्नस्यादिमे

काण्डे–'यस्मात्प्रयाणकाले यं ध्यायति तन्मय एव भवत्यात्मेति ब्रह्मवादिनो वदन्ति' इति। गीतायामप्यनुरूपं वचनं लभ्यते–

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः।।[14] इति।

## ■ गृह्यसूत्रेषु बहुदेवतावादः

उपनिषत्सु एकदेवतावादोऽस्ति सुप्रतिष्ठितः। शङ्कराचार्यस्य नये–'ब्रह्म सत्यं जगन्मिथ्या' इति। किञ्च, ऋग्वेदेऽपि आम्नातम्–'एकं सद्विप्रा बहुधा वदन्ति'[15] इति। परन्तु गृह्यसूत्रेषु ब्रह्मतत्त्वस्य प्रतिपादनन्तु स्पष्टतो नैव प्रतिष्ठितम्। मोक्षमार्गस्यानुकूलताप्रतिपादनार्थं शरीरस्य तथा मनसः शुद्धेर्विधानं विहितं स्पष्टत एव। तदर्थं कर्ममार्गस्यानुसारिणस्ते हविर्ग्रहणेन देवताः यथा तेषां मङ्गलविधानं कुर्युः तदर्थं देवतानां बहुत्वं परिकल्पितम्। तत्र इन्द्रः, अग्निः, प्रजापतिः, सवितृ, पूषा, वरुणः, विष्णुः, रुद्रः, ब्रह्मा, द्यावापृथिवी, विश्वेदेवाः, सोमः, सुर्यः, अश्विनौ, बृहस्पतिः, क्षेत्रपतिः, वाचस्पतिः, सरस्वती एताः एव प्राधान्येन मुख्यदेवताः गृह्यसूत्रेषूल्लिखिताः। एते देवास्तु कर्मजन्मानः एव एतत्तु स्पष्टैव प्रतिभाति गृह्यसूत्राणां पर्यालोचनेन। तथाह्युक्तं निरुक्ते–'कर्मजन्मानः। आत्मजन्मानः।'[16] इति। गृह्यसूत्रेषु विद्यमानासु मुख्यदेवतासु रुद्र एव प्रधानः। शूलगवनामकयज्ञस्य स एव मुख्यदेवता। एतद्व्यतिरिच्यापि बलिहरणकाले तमुद्दिश्यापि बलिः प्रदीयते। आश्वलायनगृह्यसूत्रे शूलगवानुष्ठानकाले रुद्रस्य विनाशकारिण्याः शक्तेः वर्णनं प्राप्यते। तत्र आचार्येण सतर्कीकृतं–'नास्य ग्राममाहरेयुरभिमारुको हैष देवः प्रजा भवतीति'[17] इति। एतद्व्यतिरिच्य रुद्रपत्नीरूपेण शर्वाणी, भवानी तथा रुद्राणी एतासां उल्लेखः प्राप्यते [18]। बौधायनापस्तम्बहिरण्यकेशिभारद्वाजादिगृह्यसुत्रेषु रुद्रपूत्ररूपेण जयन्तस्याप्युल्लेखो दृश्यते। रुद्रस्य भगिन्या अम्बिकाया अप्युल्लेखः प्राप्यते। किञ्च, वैखानसगृह्यसूत्रे नारायणबलिस्तथा बौधायनगृह्यसूत्रे विष्णुबलिरित्याख्येन विशेषयागेन विष्णवे बलिः प्रदीयते[19]। तत्र विष्णुः गर्भस्य देवतारूपेण स्तुतो बौधायनाचार्येण। बलिहरणे भूतयज्ञे वा धन्वन्तरिः, वैश्रवणः, अनुमतिः, श्रीः, भद्रकाली एतेषां देवानामुल्लेखः प्राप्यते। मानवगृह्यसूत्रे गन्धर्वयक्षादीन् उद्दिश्यापि बलिः प्रदीयते[20]। कौशिके सूत्रे वासुकिः, चित्रसेनः, चित्ररथः, तक्षः, उपतक्षः एतान् उद्दिश्य बलिः प्रदानस्य बिधिः उल्लिखिता । आशा, श्रद्धा, मेधा, श्रीः, विद्या एते गुणाः अपि देवतारूपेण कल्पिताः[21]। एतद्व्यतिरिच्यापि काश्चन देवताः आसन् यासामुल्लेखः गृह्यसूत्रेष्वेव प्राप्यते। कौशिकसूत्रे उपनयनसमये एतेषामुल्लेखो दृश्यते–शूल्वाणः, शत्रुञ्जयः, क्षात्रायणः, मार्त्युञ्जयः, मार्त्यवः, तक्षकः, वैशालेयस्तथा हाहाहूहू[22]। केषुचित्स्थलेषु श्रद्धा, मेधा, भूतिः एते गुणविशेषाः अपि देवीरूपेण स्तुताः[23]। गोभिलगृह्यसूत्रे हलाभियोगाष्ठाने सीता, अरडा तथा अनघा चेति देव्यः स्तुताः[24]। काठकगृह्यसूत्रे ह्रीः, श्रीः, लक्ष्मीः, पुष्टिः, काली, षष्ठी, भद्रकाली, महीशिका एताः देव्यः उल्लिखताः[25]। एतासामुल्लेखो मानवगृह्यसूत्रे षष्ठीकल्पानुष्ठानेऽपि प्राप्यते[26]। अपदेवताः अपि स्तुताः गृह्यसूत्रेषु तास्तु विनायकनाम्ना ख्याताः। मानवगृह्यसूत्रेषु चत्वारो विनायकाः प्रसिद्धाः–शालकटङ्कटः, कूष्माण्डराजपुत्रः, उस्मितः, देवयजनः चेति[27]। एते विनायकास्तु मानसिकविकृतेस्तथा दौर्भाग्यस्य विधायकाः। एवं पर्यालोचनेन ज्ञायते यत् सूत्रयुगे मानवाः भीताः आसन् प्राकृतिकशक्तेस्तस्मात्ते एवं विविधाः देवस्वरूपाः प्रकल्पिताः मानसिकशक्तिवर्धनार्थम्। एवम्प्रकारेणैव तत्कालीने युगे बहुदेवतावादस्य प्रचलनं बभूव। ततः एव अभिचारादिकर्मणामाबिर्भावो जातः इति प्रतीयते।

## ■ गृह्यसूत्रेषु सामाजिकदर्शनम्

गृह्यसूत्रकालीने युगे जनाः आसन् कुसंस्काराच्छन्नाः। ऋग्वैदिके उद्भूतं प्रकृतिपूजनमत्र अतीव गुरूत्वमाप्नोत्। गृह्यसूत्रेषु नैकानां नवीनदेवतानामाबिर्भावो जातः। अस्मिन् समये बृक्षसर्पादिपूजनेन सह अपदेवतानां पूजनमपि आरब्धम्। संस्कारेषु रूपकानां व्यवहारः तथा तेषां महान् गुरूत्वमपि असीत्। प्रत्येकव्यवहृतद्रव्याणां तथा संस्कारविधेरासीत् महानाध्यात्मिकं तथा मानसिकं विशेषत्वम्। पारस्करानुसारं–'आरोहेममश्मानमश्मेव स्थिरा भव'[28] इति। उपायनसंस्कारे तथा विवाहसंस्कारे यथाक्रममन्तेवासिनः तथा वध्वः आदिष्टाः गुरूं तथा स्वामिनं प्रति चारित्रिकस्थिरतां प्रतिपादितमश्मारोहनविधिना। धान्यानि तथा तिलास्तु उर्वरतायास्तथा समृद्धेः प्रतीकस्वरूपाः[29]। एकत्र स्थालीपाकग्रहणेन ऐक्यमत्यं भवति प्रकटितम्[30]। विवाहे हृदयस्पर्शनेन हृदयसंयुक्तिः भवति प्रकटितम्[31]।

## ■ गृह्यसूत्रेषु वृक्षविषयकदार्शनिकचिन्तनम्

गृह्यसूत्रेषु यज्ञार्थं व्यवहृताः बहवः वृक्षाः, वनस्पतयः, शस्यानि तथा नैकविधानि तृणान्युल्लिखितानि। वृक्षेषु न्यग्रोधः, उदुम्बरः, खादिरः, पलाशः तथा बिल्वः, शस्येषु ब्रीहिः तथा यवः, तृणेषु कुशः तथा दुर्वा एतेषाम्भूरिशः उल्लेखः प्राप्यते। पुंसवनानुष्ठाने न्यग्रोधवृक्षस्योल्लेखः प्राप्यते। तत्कालीने युगे वर्णाश्रमव्यवस्थायाः प्रभावः आसीन्महान् यद् वृक्षेष्वपि तस्य प्रभावः दरीदृश्यते। यथा– पलाशवृक्षस्तु ब्राह्मणजातीयः, अश्वत्थन्यग्रोधादिवनस्पतयस्तु क्षत्रियवर्गीयाः, बैल्वस्तु वैश्यजातीयः। वर्णानुसारं दण्डधारणव्यवस्था आसीत्प्रचलितम्। तत्र ब्राह्मणानां पालाशः, क्षत्रियाणां औदुम्बरः, वैश्यानां बैल्वो दण्डो विधेयः[32]। मेखलाविषये तथा वसनविषयेऽपि आसीत्पृथक् पृथक् विधयः। किञ्च, अश्वत्थो भवति आदित्यदैवतः, प्लक्षो यमदैवतः, न्यग्रोधो भवति वरुणदैवतस्तथा उदुम्बरो भवति प्रजापतिदैवतः[33]। वृक्षपूजनं तथा जनप्रियं नैवासीत्तथापि केषुचित्स्थलेष्वस्य वर्णनं प्राप्यते। शाङ्खायने उक्तं नवोढा कन्या पतिगृहगमनकाले पथि वनस्पतिदर्शनात्तत्समीपे 'वनस्पते शतल्वश' इति अर्धर्चं जपति[34]। मेधाजननानुष्ठाने पलाशवृक्षस्य पूजनमुपदिष्टम्[35]। न्यग्रोधादिक्षीरवृक्षाणां पूजनमपि दृश्यते भारद्वाजगृह्यसूत्रे। प्राचीने काले अश्वत्थवृक्षः आसीन्मरुद्दैवतः तदर्थं इन्द्रयज्ञानष्ठाने मरुद्भ्यः अश्वत्थपत्रे एव बलिं हरति[36] इति दृश्यते।

## ■ उपसंहारः

समाजस्य सम्यग्रूपेण धारणार्थमेव एतेषां गृह्यसूत्राणामावश्यकता। तदर्थमेव वर्णाश्रमव्यवस्थायाः माहात्म्यमासीदतिगुरूत्वपूर्णम्। गृह्यसूत्राणां केन्द्रीभूतायाः वर्णाश्रमव्यवस्थायाः माहात्म्यं प्रतिपादितमुपनिषद्यपि। तथाहि तैत्तिरीयोपनिषद्भाष्ये शङ्कराचार्येणोक्तं–'अथवा यो नास्ति ब्रह्मेति मन्यते, स सर्वस्यैव सन्मार्गस्य वर्णाश्रमादिव्य–

ISSN 2456-3420

वस्थालक्षणस्य नास्तित्वं प्रतिपद्यते; ब्रह्मप्रतिपत्त्यर्थत्वात्तस्य[37] इति। अत्र वर्णाश्रमावलम्बनमन्तरेण ब्रह्मप्राप्तिर्न सम्भवतीत्युच्यते। गृह्यसूत्रप्रतिपादितेनसंस्कारादिना शरीरशुद्धेः यमादीनां साधनं सरलीभवति। ईशोपनिषद्यप्याम्नातमेकादशतमे मन्त्रे–'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' इति। गृह्यसूत्रे वर्णितेषु संस्कारेषु ब्रह्मतत्त्वस्य प्रतिपादनमपि भवति। वनस्पतिष्वपि देवत्वारोपो दृश्यते। तथाहि तैत्तिरीयब्राह्मणेऽप्याम्नातं–'ब्रह्म वनं ब्रह्म आसीद्यतो द्यावापृथिवी निष्टतर्क्षुः'[38] इति। तत्कालीनार्यजनानां भेषजविषयकज्ञानमपि परिस्फुटति गृह्यसंस्कारेषु। बहुदेवतातत्त्वेन पाश्चात्यैरुक्तं देवोत्पत्ति-तत्त्वमेव सत्यं प्रतिभाति यत् देवाः प्रकृतिकशक्तेः कल्पितमूर्तरूपाः। गृह्यसूत्रेषु प्रायः सर्वाणि एव दार्शनिकानि तथा सामाजिकानि तत्त्वानि प्रतिपादितानि।

## सहायकग्रन्थाः


1. अग्निवेश्यगृह्यसूत्रम्। सम्पा. एल्. ए. रविवर्मा। त्रिवान्कुरविश्वविद्यालयः। त्रिवान्द्रम्। 1940।
2. अथर्ववेदीयकौशिकगृह्यसूत्रम्। सम्पा. तथा अनुवादकः श्री ठा. उदयनारायणसिंहः। मुजफ्फरपुरम्। 1999।
3. ऋग्वेदीयगृह्यसूत्रम्। सम्पा. अमरकुमारचट्टोपाध्यायः। संस्कृत पुस्तक भाण्डारः। कलिकाता। 2001।
4. ऋग्वेदसंहिता। सम्पा. विश्वबन्धुः। विश्वेश्वरानन्दवैदिकशोधसंस्थानम्। होशिआरपुरम् । 1963।
5. कठोपनिषद्। सम्पा. डः सीतानाथगोस्वामी। संस्कृतपुस्तकभाण्डारः। कलिकाता। 2002।
6. काठकगृह्यसूत्रम्। सम्पा. विलेम्कालाण्डमहोदयः। लाहोरः।1925।
7. गोभिलीयं गृह्यसूत्रम्। सम्पा. महामहोपाध्यायः चन्द्रकान्ततर्कालङ्कारः। कलिकाता । 1908।
8. तैत्तिरीयब्राह्मणम् । सम्पा. श्रीराजेन्द्रलालमित्रः। बङ्गीय एशियाटिक सोसाइटि। कलिकाता । 1862।
9. तैत्तिरीयोपनिषद्। सम्पा. तथा अनुवादकः स्वामी जुष्टानन्दः। उद्बोधनकार्यालयः। कलिकाता। 2014।
10. पारस्करगृह्यसूत्रम् ।सम्पा. महादेवगङ्गाधरबाक्रे ।मुन्शीराममनोहरलाल पाब्लिशर्स प्रा. लि.। नवदेहली। 1982। (द्वितीयसंस्करणम्, प्रथमसंस्करणम् 1917)।
11. पाण्डेयः, राजबलिः ।हिन्दु संस्कारस् (आङ्गलम्) ।विक्रमपाब्लिकेशन्। बेनारसनगरी ।1949।
12. बोधायनगृह्यसूत्रम्। सम्पा. आर्. श्यामशास्त्री। महीशूरः। 1920।
13. मानवगृह्यसुत्रम्। सम्पा. रामकृष्णहर्षाजिशास्त्री। केन्द्रीयग्रन्थालयः। बरोदानगरी ।1926।
14. मुण्डकोपनिषद्।सम्पा. तथा अनुवादकः स्वामी जुष्टानन्दः।उद्बोधनकार्यालयः। कलिकाता। 1999।
15. गोपालः, रामः ।इण्डिया अफ् वेदिक् कल्पसूत्रस्। नाशनाल् पाब्लिशिं हाउस्। देहली। 1959।
16. वैखानसगृह्यसूत्रम्। सम्पा. श्री रों पार्थसारथिभट्टाचार्यः। तिरुमलतिरु-पतिदेवस्थानम्। तिरुपतिः ।1997।


## पादटिप्पणी

1. हिन्दु संस्कारस्, पृष्ठाङ्कः-484।
2. पारस्करगृह्यसूत्रम्-1/16/17 ।
3. अग्निवेश्यगृह्यसूत्रम्-2/5/8, आश्वलायनगृह्यसूत्रम्-4/9/36, पारस्करगृह्यसूत्रम्-3/8/2।
4. काठकगृह्यसूत्रम्-52/2।
5. आश्वलायनगृह्यसूत्रम्-1/15/1, मानवगृह्यसूत्रम्-1/17/2।
6. आश्वलायनगृह्यसूत्रम्-4/4/2-7।
7. गोभिलगृह्यसूत्रम्-4/3/10।
8. कौशिकसूत्रम्-125/2।
9. वैखानसगृह्यसूत्रम्-5/1/7।
10. श्रीमद्भगवद्गीता- 8/26।
11. तत्रैव - 8/24-25।
12. कठोपनिषद्-1/3/8।
13. मुण्डकोपनिषद्-3/2/6।
14. श्रीमद्भगवद्गीता-8/6।
15. ऋग्वेदसंहिता-1/164/46।
16. निरुक्तम्-7/4/16-17।
17. आश्वलायनगृह्यसूत्रम्-4/9/33।
18. पारस्करगृह्यसूत्रम्-3/8/10।
19. वैखानसगृह्यसूत्रम्-7/4, बौधायनगृह्यसूत्रम्-1/10/13-16।
20. मानवगृह्यसूत्रम्-2/12/17।
21. कौशिकसूत्रम्-74/8-10।
22. तत्रैव -56/13।
23. आश्वलायनगृह्यसुत्रम्-3/5/4, शाङ्खायनगृह्यसूत्रम्-4/9/3।
24. गोभिलगृह्यसूत्रम्-4/4/28।
25. काठकगृह्यसूत्रम्-17/1।
26. मानवगृह्यसूत्रम्-2/13/6।
27. तत्रैव -2/14/17।
28. पारस्करगृह्यसूत्रम्-1/7/1।
29. आश्वलायनगृह्यसूत्रम्-1/7/8।
30. पारस्करगृह्यसूत्रम्-1/11/5।
31. तत्रैव-1/8/8।
32. आश्वलायनगृह्यसूत्रम्-1/19/11।
33. गोभिलगृह्यसूत्रम्-4/7/24।
34. शाङ्खायनगरुह्यसूत्रम्-1/15/16।
35. मानवगृह्यसूत्रम्-1/22/17।
36. पारस्करगृह्यसूत्रम्-2/15/3-4।
37. तैत्तिरीयोपनिषद्भाष्यम्- 2/1/6।
38. तैत्तिरीयब्राह्मणम्-2/8/9/9।


*वृत्तिः-शोधच्छात्रः*

*संस्था- यादवपुरविश्वविद्यालयः, कलिकाता, पश्चिमवङ्गः*

ISSN 2456-3420

# धातूनामन्तर्गणविभागः तत्र पाठफलञ्च

डॉ. जयदेवदिण्डा

**उपोद्धातः**

तिङन्तरूपस्य पदस्य प्रकृतिर्धातुः। धातव एव वाक्प्रपञ्चस्य बीजभूताः सन्ति। धातुभ्यः प्रत्ययान् विधाय पदानि संस्कृतानि पाणिनिना। धातुसंज्ञा च 'भूवादयो धातवः' (अष्टा.-1.3.1) इत्यनेन व्यधायि। एतन्मतानुसारं ये शब्दाः क्रियावाचकाः सन्तः भ्वादिप्रभृतिदशगणपठिताः ते धातुसंज्ञका भवन्ति। क्रियावाचकत्वे सति दशगणपठितत्वं धातुत्वमिति धातोः निष्कृष्टं लक्षणम्। तदेवोक्तं सिद्धान्तकौमुद्यामपि-'क्रियावाचिनो भ्वादयो धातुसंज्ञाः स्युः' इति। अथ चायं धातुशब्दः शब्दशास्त्रेऽस्मिन् टि-भ-घु-नदीप्रभृतिसंज्ञा इव पारिभाषिक एव। 'सनाद्यन्ता धातवः' (अष्टा.-3.1.32) इत्यनेन सूत्रेणापि धातुसंज्ञा विहिता। एतच्च सूत्रं सनादिप्रत्ययान्तशब्दानां धातुसंज्ञां विदधाति। प्रमुखरूपेण धातुसंज्ञाविधायकत्वेन 'भूवादयो धातवः' (अष्टा.-1.3.1) इत्येव गृह्यते शास्त्रेऽस्मिन्।

यत्र धातवः पठ्यन्ते स धातुपाठः पाणिन्यादिप्रणीतः धातूनामर्थावबोधकग्रन्थः। पाणिनीयधातुपाठः भ्वादि-आदादि-जुहोत्यादि-दिवादि-स्वादि-तुदादि-रुधादि-तनादि-क्र्यादि-चुरादयश्चेति दशसु गणेषु विभक्तः। दशसु गणेषु विभक्ता अपि धातवः केषुचिद् अन्तर्गणेषु विभक्ताः सन्ति। लघुशोधप्रबन्धेऽस्मिन् धातूनामन्तर्गणाः, अन्तर्गणेषु धातूनां पाठफलञ्च समासेन यथामति आलोच्यन्ते।

**1. गणविभागः**

भूधातोः लट्लकारे प्रथमपुरुषैकवचने रूपं 'भवति' इति, अद्-धातोः 'अत्ति' इति, हु-धातोः 'जुहोति' इति। ननु धातूनामेवं रूपभेदे किं कारणं चेदुच्यते, विकरणमेव धातूनां भिन्नरूपत्वे कारणम्। विकरणानि आधारीकृत्यैव धातवः दशसु गणेषु विभक्ताःवर्तन्ते।

कः धातुः कस्मिन् गणे अन्तर्भवति इति अभिज्ञानम् एतेषां विकरणप्रत्ययानाम् आधारेणैव भवति। भ्वादिगणे 'कर्तरि शप्' (अष्टा.-3.1.68) इत्यनेन धातुभ्यः शब्विकरणं विधीयते। अदादिगणे 'अदिप्रभृतिभ्यः शपः' (अष्टा. - 2.4.72) इत्यनेन धातुभ्यः विहितस्य शब्विकरणस्य लुक् भवति। जुहोत्यादिगणे 'जुहोत्यादिभ्यः श्लुः' (अष्टा. - 2.4.75) इत्यनेन धातुभ्यः आगतस्य शपः श्लुः भवति। दिवादिगणे 'दिवादिभ्यः श्यन्' (अष्टा. - 3.1.69) इत्यनेन धातुभ्यः शपः अपवादरूपेण श्यन्विकरणं भवति। स्वादिगणे 'स्वादिभ्यः श्नुः' (अष्टा. - 3.1.73) इत्यनेन शपः अपवादभूतं श्नुविकरणं भवति। तुदादिगणे 'तुदादिभ्यः शः' (अष्टा. - 3.1.77) इत्यनेन धातुभ्यः शपोऽपवादत्वेन शविकरणं भवति। रुधादिगणे विद्यमानेभ्यो धातुभ्यः 'रुधादिभ्यः श्नम्' (अष्टा. - 3.1.78) इत्येनन शपः अपवादत्वेन श्नम्-विकरणं भवति। तनादिगणे 'तनादिकृञ्भ्य उः' (अष्टा. - 3.1.79) इत्यनेन शपः अपवादत्वेन अनुधातु उविकरणं भवति। क्र्यादिगणे 'क्र्यादिभ्यः श्ना' (अष्टा. - 3.1.81) इत्यनेन धातुभ्यः विहितस्य शपः अपवादत्वेन श्नाविकरणं भवति। चुरादिगणे धातुभ्यः 'कर्तरि शप्' (अष्टा. - 3.1.68) इत्यनेन शब्विकरणं विधीयते। अष्टानां गणानां विकरणानि तु प्रत्यक्षं दृश्यन्ते। द्वितीयतृतीयगणयोः विकरणं तु लुप्यते। तृतीयगणे धातोः आदिमवर्णस्य द्वित्वं भवति। विकरणप्रत्ययः यत्र न दृश्यते, प्रथमवर्णस्यापि द्वित्वं यत्र न भवति सः धातुः द्वितीयगणेऽन्तर्भूतः। प्रथमषष्ठगणयोः साम्यमधिकमस्ति। प्रथमगणस्य विकरणप्रत्ययः 'शप्', षष्ठगणस्य च 'शः'। उभययोः अनुबन्धरहितरूपं तु 'अ' एव।

**2. पुष्पादीक्षितकृतगणविभागः**

पुष्पादीक्षितमते धातोः यो गणविभागः वस्तुतः सः धातुपाठस्य सार्वधातुकप्रत्ययान् उद्दिश्य कृतो वर्तते। आर्धधातुकप्रत्ययानां कृते नास्त्ययं गणविभागः। तन्मते आर्धधातुकप्रत्ययानां सिद्धिरपि गणविभागे या क्रियते सा न समीचीना। अतः तया अङ्गानामदन्तत्वमनदन्त-त्वमनुसृत्य गणानामपि प्रक्रियादृष्ट्या द्वौ विभागौ कृतौ, येन अल्पीयसा कालेन प्रक्रियासिद्धिः भवति। स च विभागः-

क. प्रथमगणसमूहः- भ्वादिः दिवादिः तुदादिः चुरादिश्च इत्येषां चतुर्णां गणानां समूहः प्रथमः। यतोऽत्र धातुभ्यो विकरणसंयोजनेन निष्पद्यते यदङ्गं तददन्तं भवति।

ख. द्वितीयगणसमूहः- अदादिः जुहोत्यादिः स्वादिः रुधादिः तनादिः क्र्यादिः इत्येषां षण्णां गणानां समूहो द्वितीयः। यतोऽत्र धातुभ्यो विकरणसंयोजनेन अनदन्तमङ्गं निष्पद्यते।

**3. अन्तर्गणाः**

एतान् दशगणान् विहाय अन्येऽपि अन्तर्गणा धातुपाठे पठिताः। यथा सम्प्रसारणं मनसि निधाय 'यजादि'गणः रचितः। नुम्विधानाय 'मुचादयः' सङ्गृहीताः। दशसु गणेषु सत्स्वपि धातूनाम् अन्तर्गणे विद्यमानस्य किमपि कारणं तु अवश्यं स्यादेव। अन्तर्गणाः, तेषु धातूनां पाठफलञ्च अधः विचार्यन्ते-

क. ज्वलादिः- 'ज्वलितिकसन्तेभ्यो णः' (अष्टा. - 3.1.140) इति सूत्रेण विकल्पेन ज्वलादिगणे पठितेभ्यः धातुभ्यः णप्रत्ययः भवति। यथा- ज्वलः, ज्वालः इति ।ज्वलादिगणे पठिताः धातवः -'ज्वल दीप्तौ', 'चल कम्पने', 'जल घातने', 'टल ट्वल वैक्लव्ये', 'ष्ठल स्थाने', 'हल विलेखने', 'णल गन्धे', 'पल गतौ', 'बल प्राणने धान्यावरोधने च', 'पुल महत्त्वे', 'कुल संस्त्याने बन्धुषु च', 'शल हुल पत्र्ल गतौ',

ISSN 2456-3420

'क्नथे निष्पाके', 'पथे गतौ', 'मथे विलोडने', 'टुवम उद्गिरणे', 'भ्रमु चलने', 'क्षर सञ्चलने', 'षह मर्षणे', 'रमु क्रीडायाम्', 'षर्दॢ विशरणगत्यवसादनेषु', 'शर्दॢ शातने', 'क्रुश आह्वाने रोदने च', 'कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु', 'बुध अवगमने', 'रुह बीजजन्मनि प्रादुर्भावे च', 'कस गतौ'[1] चेति।

ख. द्युतादिः– 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' (अष्टा. – 3.1.49) इत्यनेन द्युतादिगणे पठितेभ्यः धातुभ्यो लुङि परस्मैपदिषु च्लेरङ् भवति। यथा– अद्युतत् इति।द्युतादयः द्वाविंशतिः धातवः सन्ति। द्युतादिगणे पठिताः धातवः –'द्युत दीप्तौ', 'श्विदा वर्णे', 'ञिमिदा स्नेहने', 'ञिष्विदा स्नेहनमोचनयोः', 'रुच दीप्तावभिप्रीतौ च', 'घुट परिवर्तने', 'रुट लुट लुठ प्रतिघाते', 'शुभ दीप्तौ', 'क्षुभ सञ्चलने', 'णभ[2] तुभ हिंसायाम्', 'स्रंसु ध्वंसु[3] भ्रंसु अवस्रंसने', 'स्रम्भु विश्वासे', 'वृतु वर्तने', 'वृधु वृद्धौ', 'शृधु शब्दकुत्सायाम्', 'स्यन्दू प्रस्रवणे', 'कृपू सामर्थ्येचेति।

'द्युद्भ्यो लुङि' (अष्टा. – 1.3.91) इत्यनेन लुङि विकल्पेन परस्मैपदं भवति। यथा– स्रंसु– अस्रंसत्, अस्रंसिष्ट।

ग. घटादिः– 'घटादयो मितः' इत्यनेन घटादिषु पठितानां मित्त्वं भवति। मित्त्वात् 'मितां ह्रस्वः' (अष्टा. – 6.4.92) इत्यनेन णौ अङ्गस्य ह्रस्वो भवति। यथा– घटधातोः णौ 'घटयति'इति रूपम्। घटादयो धातवः–'घट चेष्टायाम्', 'व्यथ भयसञ्चलनयोः', 'प्रथ प्रख्याने', 'प्रस विस्तारे', 'म्रद मर्दने', 'स्खद स्खदने', 'क्षजि गतिदानयोः', 'दक्ष गतिहिंसनयोः'[4],'कदि क्रदि क्लदि वैक्लव्ये'[5],'जित्वरा सम्भ्रमे', 'ज्वर रोगे', 'गड सेचने', 'हेड वेष्टने'[6],'वट[7] भट परिभाषणे', 'णट नृत्तौ'[8], 'ष्टक प्रतीघाते', 'चक तृप्तौ'[9], 'कखे हसने', 'रगे शङ्कायाम्', 'लगे सङ्गे', 'ह्रगे ह्लगे षगे ष्टगे संवरणे', 'कगे नोच्यते',[10] 'अक अग कुटिलायां गतौ', 'कण रण गतौ', 'चण शण श्रण दाने च', 'श्रथ श्लथ क्रथ क्लथ हिंसार्थाः', 'ज्वल दीप्तौ', 'ह्वल ह्मल चलने', 'स्मृ आध्याने', 'दॄ भये'[11], 'नॄ नये', 'श्रा पाके', 'मारणतोषणनिशामनेषु ज्ञा', 'कम्पने चलिः', 'छदि ऊर्जने', 'जिह्वोन्मथने लडिः', 'मदी हर्षग्लेपनयोः', 'ध्वन शब्दे', 'स्वन अवतंसने', 'शमो दर्शने', 'यमो अपरिवेषणे', 'स्खदि अवपरिभ्याञ्च', 'फण गतौ'[12] चेति।

घ. यजादिः– यजादिगणे पठितानां धातूनां 'वचिस्वपियजादीनां किति' (अष्टा. – 6.1.15) इत्यनेन किति प्रत्यये परे सम्प्रसारणं भवति। यथा– इयाज, उवाप। इज्यते, उह्यते। यजादयश्च नव धातवः – 'यज देवपूजासङ्गतिकरणदानेषु', 'डुवप् बीजसन्ताने'[13], 'वह प्रापणे', 'वस निवासे', 'वेञ् तन्तुसन्ताने', 'व्येञ् संवरणे', 'ह्वेञ् स्पर्धायां शब्दे च', 'वद व्यक्तायां वाचि', 'टुओश्वि गतिवृद्ध्योः' चेति।

ङ सिवादिः– 'सिवादीनां वाड्व्यवायेऽपि' (अष्टा. – 8.3.71) इत्यनेन परिनिविभ्यः परेषां सिवादीनां सस्य षो वा स्यादड्व्यवायेऽपि। यथा– पर्यषहत पर्यसहत वा। 'षिवु तन्तुसन्ताने', 'षह मर्षणे', 'ष्टुञ् स्तुतौ', 'ष्वञ्ज परिष्वङ्गे'चेति सिवादयो धातवः।

च. तुजादिः– तुजादिराकृतिगणः। 'तुजादीनां दीर्घोऽभ्यासस्य' (अष्टा. – 6.1.7) इत्यनेन गणेऽस्मिन् पठितेभ्यो धातुभ्यः छन्दसि अभ्यासस्य दीर्घो भवति। यथा– तूतोज।

छ. फणादिः– 'फणां च सप्तानाम्' (अष्टा. – 6.4.125) इत्यनेन सूत्रेण फणादिगणे पठितानां धातूनाम् एत्वाभ्यासलोपौ वा स्तः किति लिटि सेटि थलि च। यथा– राजृ– रराज, रेजतुः, रराजतुः। फणादयो यथा– 'फण गतौ', 'राजृ दीप्तौ', 'टुभ्राजृ[14] टुभ्राशृटुभ्लाशृ दीप्तौ', 'स्यमुस्वन शब्दे' चेति।

ज. जक्षित्यादिः– जक्षित्यादिः अदादिगणस्य अन्तर्गणः। अस्मिन् गणे पठितानां 'जक्षित्यादयः षट्' (अष्टा. – 6.1.6) इत्यनेन जागृ इत्यादयः षड्धातवः अन्ये जक्षितिश्च अभ्याससंज्ञकाः स्युः। यथा– जाग्रत्, दरिद्रत्, शासत्, चकासत्, दीध्यत्, वेव्यत्, जक्षत्।जक्षित्यादयः – 'जक्ष भक्षणहसनयोः', 'जागृ निद्राक्षये', 'दरिद्रा दुर्गतौ','चकासृ दीप्तौ','शासु अनुशिष्टौ', 'दीधीङ् दीप्तिदेवनयोः', 'वेवीङ् वेतिना तुल्ये'[15] चेति।

झ. रुदादिः– अयमदादिगणे पठितः अन्तर्गणः। 'रुदिर् अश्रुविमोचने', 'ञिष्वप् शये', 'श्वस प्राणने', 'अन प्राणने', 'जक्ष भक्षणहसनयोः'[16] इत्येते पञ्च धातवः रुदादयः सन्ति। कार्यत्रयार्थम् अस्मिन् गणे धातवः पठिताः। तानि च कार्याणि–

अ. 'रुदादिभ्यः सार्वधातुके' (अष्टा. – 7.2.76) इत्यनेन सूत्रेण रुदादिभ्य उत्तरस्य वलादेः सार्वधातुकस्य इडागमो भवति। यथा– श्वस– श्वसिति।

आ. 'रुदश्च पञ्चभ्यः' (अष्टा. – 7.3.98) इति रुदादिभ्यः परस्य सार्वधातुकस्य हलादेरपृक्तस्य ईडागमो भवति। यथा– श्वस– अश्वसीत्।

इ. 'अड् गार्ग्यगालवयोः' (अष्टा. – 7.3.99) इत्यनेन सूत्रेण रुदादिभ्यः पञ्चभ्यः परस्य हलादेः पितः अपृक्तस्य सार्वधातुकस्य अडागमो भवति गार्ग्यगालवयोर्मतेन। तेन कार्यमिदं विकल्पेन भवति। यथा– रुद– अरोदीत्, अरोदत्।

ञ. णिजादिः– 'निजां त्रयाणां गुणः श्लौ' (अष्टा. – 7.4.75) इति सूत्रेण णिजादिगणे पठितानां श्लौ अभ्यासस्य गुणो भवति। णिजिर्, विजिर्, विषॢ इति णिजादयः। यथा– नेनेक्ति, वेवेक्ति, वेवेष्टि।णिजादयश्च त्रयः –'णिजिर् शौचपोषणयोः', 'विजिर् पृथग्भावे', 'विषॢ व्याप्तौ' चेति।

ट. भृञादिः– 'भृञामित्' (अष्टा. – 7.4.76) इत्यनेन 'डुभृञ् धारणपोषणयोः', 'माङ् माने शब्दे च', 'ओहाङ् गतौ' इति त्रयाणाम् अभ्यासस्य शौ परे इत् स्यात्। यथा– बिभर्ति, मिमीते, जिहीते।

ठ. पुषादिः– 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' (अष्टा. – 3.1.49) इत्यनेन पुषादिगणे पठितानां धातूनां लुङिच्लेरङ् भवति। यथा– तुषधातोः

प्रथमपुरुषैकवचने अतुषत् इति रूपं भवति।पुषादयश्च – 'पुष पुष्टौ', 'शुष शोषणे', 'तुष प्रीतौ', 'दुष वैकृत्ये', 'श्लिष आलिङ्गने', 'शक विभाषितो[17] मर्षणे', 'ष्विदा गात्रप्रक्षरणे', 'क्रुध क्रोधे', 'क्षुभ बुभुक्षायाम्', 'शुध शौचे', 'रध हिंसासंराद्ध्योः', 'णश अदर्शने', 'तृप प्रीणने', 'दृप हर्षमोहनयोः', 'द्रुह जिघांसायाम्', 'मुहु वैचित्ये', 'ष्णुह उद्गिरणे', 'ष्णिह प्रीतौ'[18], 'शमु उपशमे', 'तमु काङ्क्षायाम्', 'दमु उपशमे', 'श्रमु तपसि खेदे च', 'भ्रमु अनवस्थाने', 'क्षमू सहने', 'क्लमु ग्लानौ', 'मदी हर्षे', 'असु क्षेपणे', 'यसु प्रयत्ने', 'जसु मोक्षणे', 'तसु दसु उपक्षये', 'वसु स्तम्भे', 'व्युष विभागे','प्लुष दाहे', 'बिस प्रेरणे', 'कुस संश्लेषणे', 'बुस उत्सर्गे', 'मुस खण्डने', 'मसी परिणामे', 'लुठ विलोडने', 'उच समवाये', 'भृशु भ्रंशु अधःपतने', 'वृश वरणे', 'कृश तनूकरणे', 'ञितृषा पिपासायाम्', 'हृष तुष्टौ', 'रुष रिष हिंसायाम्', 'डिप क्षेपे', 'कुप क्रोधे', 'गुप व्याकुलत्वे', 'युग रुप लुप विमोहने', 'लुभ गार्ध्ये', 'क्षुभ सञ्चलने', 'णभ तुभ हिंसायाम्', 'क्लिदू आर्द्रीभावे', 'ञिमिदा स्नेहने', 'ञिक्ष्विदा स्नेहनमोचनयोः', 'ऋधु वृद्धौ', 'गृधु अभिकाङ्क्षायम्'[19] चेति।

ड. स्वादिः– 'स्वादय ओदितः' इति गणसूत्रमिदम्। अन्तर्गणेऽस्मिन् पठिताः 'षूङ्प्राणिप्रसवे', 'दूङ्परितापे', 'दीङ्क्षये', 'डीङ्विहायसा गतौ', 'धीङ्आधारे', 'मीङ्हिंसायाम्', 'रीङ्श्रवणे', 'लीङ्श्लेषणे','व्रीङ्वृणोत्यर्थे'चेति धातवः ओदित्कार्यभाजः भवन्ति। ओदितः फलं तु 'ओदितश्च' (अष्टा.– 8.2.45) इति सूत्रेण ओकारेतो धातोः निष्ठातकारस्य नकारादेशः। यथा– ओलस्जी– लग्नः।

ढ. शमादिः– 'शमामष्टानां दीर्घः श्यनि' (अष्टा. – 7.3.74) इत्यनेन शमादीनाम् अष्टानां दीर्घो भवति श्यनि। यथा– दमु– दाम्यति, शमु– शाम्यति इति। किञ्च 'शमित्यष्टाभ्यो घिनुण्' (अष्टा. – 3.2.141) इत्यनेन शमादिभ्यो धातुभ्योऽष्टाभ्यः तच्छीलादिषु कर्तृषु घिनुण् प्रत्ययो भवति। यथा– दमु– दमी। शमादयश्च 'शमुउपशमे', 'तमु काङ्क्षायाम्', 'दमु उपशमे', 'श्रमु तपसि खेदे च', 'भ्रमु अनवस्थाने', 'क्षमू सहने', 'क्लमु ग्लानौ', 'मदी हर्षे'[20] चेति।

ण. रधादिः– 'रधादिभ्यश्च'[21] (अष्टा. – 7.2.45) इत्यनेन रधादिगणे पठितेभ्यः 'रध हिंसासंसिद्ध्योः', 'णश अदर्शने', 'तृप प्रीणने', 'दृप हर्षमोहनयोः', 'द्रुह जिघांसायाम्', 'मुह वैचित्ये', 'ष्णुह उद्गिरणे', 'ष्णिह प्रीतौ'[22] चेत्यादिभ्योऽष्टाभ्य उत्तरस्य वलादेरार्धधातुकस्य विकल्पेन इडागमोभवति। यथा–रध–रधिता, रद्धा।

त. किरादिः– 'किरश्च पञ्चभ्यः' (अष्टा. – 7.2.35) इत्यनेन किरादिभ्यः 'कॄविक्षेपे', 'गॄनिगरणे', 'दृङ्आदरे', 'धृङ्अवस्थाने', 'प्रच्छ ज्ञीप्सायाम्' चेत्येतेभ्यो धातुभ्यः सनि प्रत्यये इडागमो भवति। यथा– पिपृच्छिषति, जिगरिषति।

थ. मुचादिः– 'मुचादिगणः' तुदादिगणस्य कश्चन अन्तर्गणः। अस्मिन् अष्टौ धातवो विद्यन्ते। गणेऽस्मिन् पठितानां धातूनां'शे मुचादीनाम्' (अष्टा. – 7.1.59) इत्यनेन नुमागमो भवति। यथा– लुपॣ– लुम्पति। मुचादयः यथा– 'मुचॢमोक्षणे', 'लुपॢछेदने', 'विदॢ लाभे', 'लिप उपदेहे', 'षिच क्षरणे', 'कृती छेदने', 'खिद परिखाते', 'पिशि अवयवे'[23] चेति।

द. कुटादिः– कुटादिः तुदादिगणे पठितः कश्चन अन्तर्गणः।'कुट कौटिल्ये','पुट संश्लेषणे', 'कुच सङ्कोचने', 'गुज शब्दे', 'गुड रक्षायाम्', 'डिप क्षेपे', 'छुर छेदने', 'स्फुट विकसने', 'मुट आक्षेपमर्दनयोः', 'त्रुट छेदने', 'तुट कलहकर्मणि', 'चुट छुट छेदने', 'जुड बन्धने', 'कड मदे', 'लुट संश्लेषणे', 'कृड घनत्वे', 'कुड बाल्ये', 'पुड उत्सर्गे', 'घुट प्रतिघाते', 'तुड तोडने', 'थुड स्थुड संवरणे', 'स्फुर स्फुल सञ्चलने', 'स्फुड चुड ब्रुड संवरणे', 'क्रुड भृड निमज्जने', 'गुरी उद्यमने', 'णू स्तवने', 'धू विधूनने', 'गु पुरीषोत्सर्गे', 'ध्रु गतिस्थैर्ययोः', 'कुङ् शब्दे'[24] चेत्येते कुटादयः धातवः। 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' (अष्टा. – 1.2.1) इत्यनेन एभ्यो गाङ्कुटादिभ्यः परे अञ्णितः प्रत्यया ङिद्वद् भवन्ति इत्यर्थः। तेन 'क्ङिति च' (अष्टा. – 1.1.5) इत्यनेन गुणवृद्धिनिषेधो भवति। यथा– कुटिता, चुकुचिथ, चुकोट, कुटिता।

ध. तृम्फादिः– तृम्फादिगणः'इति तुदादिगणस्य कश्चन अन्तर्गणः। अस्मिन् गणे तुदादिगणस्य सर्वे अनिदितः धातवः[25] समाविश्यन्ते। एतेषां सर्वेषाम्'अनिदितां हलः उपधायाः क्ङिति' (अष्टा. – 6.4.24) इत्यनेन किति ङिति च प्रत्यये नकारलोपे कृते सति'शे तृम्फादीनां नुम्वाच्यः' (वा.– 4323) इत्यनेन वार्तिकेन शविकरणे परे नुमागमः भवति । यथा– तृम्फति। अस्मिन् गणे पठिताः धातवः 'तृम्फ तृप्तौ', 'तुम्प तुम्फ हिंसायाम्', 'दृम्फ उत्क्लेशे', 'ऋम्फ हिंसायाम्', 'गुम्फ ग्रन्थे', 'उम्भ पूरणे', 'शुम्भ शोभायाम्','तृन्ह् हिंसायाम्' चेति।

न. भिदादिः– 'षिद्भिदादिभ्योऽङ्' (अष्टा. – 3.3.104) इत्यनेन भिदादिगणे पठितेभ्यो धातुभ्यो भावेऽकर्तरि कारके स्त्रियामङ्भवति। यथा– छिदिॅ–धातोः भावे अङ्प्रत्यये ततः अजादित्वात् 'अजाद्यतष्टाप्' (अष्टा. – 4.1.4) इति सूत्रेण टापि छिदा इति रूपं भवति। भिदादयश्च 'भिदिॅ विदारणे','छिदिॅ द्वैधीकरणे','विद ज्ञाने','क्षिप प्रेरणे','गुहू संवरणे','डुधाञ् धारणपोषणयोः','मिदृ मेदृ मेधाहिंसनयोः','मेधृ सङ्गमे च', 'ऋ गतौ','हृञ् हरणे','क्षि क्षये', 'क्षि निवासगत्योः','तॄ प्लवनतरणयोः','धृञ् धारणे','लिख अक्षरविन्यासे','चुद प्रेरणे','पीड अवगाहने','डुवप् बीजतन्तुसन्ताने','वस निवासे','मृजूष् शुद्धौ','ऋप कृपायां गतौ च'इत्येते वेदितव्याः।

प.तनोत्यादिः– 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (अष्टा. – 6.4.37) इत्यनेन सूत्रेण तनोत्यादीनाम् अनुनासिकलोपः। 'तनुविस्तारे', 'क्षणुक्षिणु हिंसायाम्', 'ऋणु गतौ', 'तृणु अदने', 'घृणु दीप्तौ', 'वनु याचने', 'मनु अवबोधने' चेति अष्टौ तनोत्यादयः।

फ. ल्वादि:- 'लूञ् छेदने', 'स्तञ्जि् आच्छादने', 'कञ्जि् हिंसायाम्', 'वञ्जि् वरणे', 'धूञ् कम्पने', 'शॄ हिंसायाम्', 'पॄ पालनपूरणयो:', 'वॄ वरणे', 'भॄ भर्त्सने', 'मॄ हिंसायाम्', 'दॄ विदारणे', 'जॄ वयोहानौ', 'नॄ नये','कॄ हिंसायाम्', 'ॠ गतौ', 'गॄ शब्दे', 'ज्या वयोहानौ', 'री गतिरेषणयो:', 'ली श्लेषणे', 'व्ली वरणे', 'प्ली गतौ' चेत्येते ल्वादयो गृह्यन्ते। तेभ्य उत्तरस्य निष्ठातकारस्य 'ल्वादिभ्य:' (अष्टा. - 8.2.44) इत्यनेन सूत्रेण नकारादेशो भवति। यथा- लूञ्- लून:। अस्मिन् गणे एकविंशति: धातवो विद्यन्ते।

ब. प्वादि:- प्वादय: क्र्यादिषु पठ्यन्ते। 'प्वादीनां ह्रस्व:' (अष्टा. - 7.3.80) इत्यनेन 'पू' इत्येवमादीनां ह्रस्वो भवति शिति परे। यथा- पूञ् - पुनाति। लूञ् - लुनाति। स्तञ्जि् - स्तृणाति। 'पूञ् पवने', 'लूञ् छेदने', 'स्तञ्जि् आच्छादने', 'कञ्जि् हिंसायाम्', 'वञ्जि् वरणे', 'धूञ् कम्पने', 'शॄ हिंसायाम्', 'पॄ पालनपूरणयो:', 'वॄ वरणे', 'भॄ भर्त्सने', 'मॄ हिंसायाम्', 'दॄ विदारणे', 'जॄ वयोहानौ', 'नॄ नये', 'कॄ हिंसायाम्', 'ॠ गतौ', 'गॄ शब्दे', 'ज्या वयोहानौ', 'री गतिरेषणयो:', 'ली श्लेषणे', 'व्ली वरणे', 'प्ली गतौ', 'व्री वरणे', 'भ्री भरणे', 'क्षीष् हिंसायाम्'[26] चेत्येते प्वादिगणीया: धातव:।

भ. आकुस्मीया:-'आकुस्मादात्मनेपदिन:' इति अकर्तृगामि-क्रियाफलेऽपि आत्मनेपदमेव।'कुस्म नाम्नो वा' इति धातुमभिव्यप्यायं गण:। आकुस्मीयात्मनेपदं णिच्सन्नियोगेन एवेति व्याख्यातार:। यथा चित- चेतयते। त्रुट- त्रोटयते। अस्मिन् गणे अष्टात्रिंशत् धातवो विद्यन्ते। अकुस्मीया: धातव: 'चित संचेतने', 'दशि दंशने', 'दसि दर्शनदंशनयो:', 'डप डिप सङ्घाते', 'तत्रि कुटुम्बधारणे', 'मत्रि गुप्तपरिभाषणे', 'स्पश ग्रहणसंश्लेषणयो:', 'तर्ज भर्त्स तर्जने', 'बस्क गन्ध अर्दने', 'विष्क हिंसायाम्', 'निष्क परिमाणे', 'लल ईप्सायाम्', 'कूण संकोचे', 'तूण पूरणे', 'भ्रूण आशाविशङ्क्यो:', 'शठ श्लाघायाम्', 'यक्ष पूजायाम्', 'स्यम वितर्के', 'गूर उद्यमने', 'शम लक्ष आलोचने', 'कुत्स अवक्षेपणे', 'त्रुट छेदने', 'गल स्रवणे', 'भल आभण्डने', 'कूट आप्रदाने', 'कुट्ट प्रतापे', 'वञ्चु प्रलम्भने', 'वृष शक्तिबन्धने', 'मद तृप्तियोगे', 'दिवु परिकूजने', 'गृ विज्ञाने', 'विद चेतनाख्याननिवासेषु', 'मान स्तम्भे', 'कुस्म नाम्नो वा'[27] चेति।

म. आगर्वीया:- 'आगर्वादात्मनेपदिन:' इति वचनेन अस्मिन् गणे पठिता धातव आत्मनेपदिनो भवन्ति। अस्मिन् दश धातवो विद्यन्ते। यथा- पद- पदयते। मृग- मृगयते।आगर्वीया: धातव:'पद गतौ', 'गृह ग्रहणे', 'मृग अन्वेषणे', 'कुह विस्मापने', 'शूर वीर विक्रान्तौ', 'स्थूल परिबृंहणे', 'अर्थ उपयाच्ञायाम्', 'सत्र सन्तानक्रियायाम्', 'गर्व माने'[28] चेति।

य. आधृषीया:- 'आधृषाद्वा' (गणसूत्र- 202) इति गणसूत्रम्। अनेन सूत्रेण गणेऽस्मिन् पठितेभ्यो धातुभ्यो णिच्प्रत्ययो विकल्पेन भवति। यथा- युजधातो: विकल्पेन णिच्प्रत्यये योजयति, योजति वा इति रूपं भवति। गणोऽयं धृषान्त:। अतोऽस्य आधृषीयत्वम्। युजादि: इत्यस्य नामान्तरम्। गणेऽस्मिन् 'युज पृच संयमने', 'अर्च पूजायाम्', 'षह मर्षणे', 'ईर क्षेपे', 'ली द्रवीकरणे', 'वृजी वर्जने', 'वृञ् आवरणे', 'जॄ ज्रि वयोहानौ', 'रिच वियोजनसम्पर्चनयो:', 'शिष असर्वोपयोगे', 'तप दाहे', 'तृपि तृप्तौ', 'छृदी संदीपने', 'दृभी भये', 'दृभ सन्दर्भे', 'श्रथ मोक्षणे', 'मी गतौ', 'ग्रन्थ बन्धने', 'शीक चीक आमर्षणे', 'अर्द हिंसायाम्', 'हिसि हिंसायाम्', 'अर्ह पूजायाम्', 'आङः षद पद्यर्थे', 'शुन्ध शौचकर्मणि', 'छद अपवारणे', 'जुष परितर्कणे', 'धूञ् कम्पने', 'प्रीञ् तर्पणे', 'श्रन्थ ग्रन्थ सन्दर्भे', 'आपॢ लम्भने', 'तनु श्रद्धोपकरणयो:', 'वद सन्देशवचने', 'वच परिभाषणे', 'मान पूजायाम्', 'भू प्राप्तौ', 'गर्ह विनिन्दने', 'मार्ग अन्वेषणे', 'कठि शोके', 'मृजू शौचालङ्कारयो:', 'मृष तितिक्षायाम्', 'धृष प्रहसने'[29] चेत्येते धातव: विद्यन्ते। आधृषीयस्य एव युजादिरिति नामान्तरम्। अत्र आद्यो धातु: 'युज संयमने' इति। तस्मात् युजादिरयम्। अन्तिमो धातु: धृषि:। अत आधृषीयोऽपि।

व. वृतादि:- 'वृद्भ्य: स्यसनो:' (अष्टा. - 1.3.92) इत्यनेन स्ये सनि च वैकल्पिकं परस्मैपदं भवति। द्युतादिष्वेव वृतादय: पठ्यन्ते। 'वृतु वर्तते', 'वृधु वृद्धौ', 'शृधु शब्दकुत्सायाम्', 'स्यन्दू प्रस्रवणे', 'कृपू सामर्थ्ये' चेति धातवो वृतादिगणे पठिता:।

'न वृद्भ्यश्चतुर्भ्य:' (अष्टा. - 7.2.59) इति सूत्रेण वृतादिभ्य: चतुर्भ्य उत्तरस्य सकारादे: आर्धधातुकस्य परस्मैपदेषु पक्षे इडगमो न भवति। यथा- वृतु- वर्तिष्यते, वर्त्स्यति। विवृत्सति- विवर्तिषते।

ल. काण्यादि:- 'काण्यादीनां वेति वक्तव्यम्' (वा.- 4613 ) इति चङ्परे णौ उपधाह्रस्व: विकल्पेन भवति। ण्यन्ता: कणरणभणश्रणलुपहेठा: चेति षड्धातव: भाष्ये उक्ता: सन्ति। ह्वयिवाणिलोटिलोपय: चत्वार: न्यासे अधिका उक्ता:। वाणिलोठी अप्यन्यत्र।भाष्यमते काण्यादिगणे ये धातव: सन्ति ते 'कण शब्दे','कण गतौ शब्दे च', 'कण निमीलने', 'रण शब्दे', 'रण गतौ शब्दे च', 'भण शब्दे', 'श्रण दाने गतौ च', 'श्रण दाने', 'लुप विमोहने', 'लुपॢ छेदने', 'हेठ भूतप्रादुर्भावे', 'हेठ विबाधायाम्'चेति।

4. उपसंहृति:

एवं लघुशोधप्रबन्धेऽस्मिन् आदौ धातूनां गणविभाग: प्रदर्शित:। गणविभागस्यास्य मूलं तु विकरणमेव। विकरणभेदे एव धातूनां गणविभाग: परिकल्पित:। तदनु पुष्पादीक्षितमते धातूनां विभागद्वयं प्रदर्शितम्। अयं विभागस्तु प्रक्रियादृष्ट्या एव कृतो वर्तते। तत: धातूनाम् अन्तर्गणा: विचारिता:। विचारकाले प्रत्येकम् अन्तर्गणे ये धातव: पठिता: तेषां सार्थं उल्लेखं विधायकिञ्च अन्तर्गणेषु पाठफलञ्च विस्तारेण आलोचितम्।

इदानीं घटादिगणे पठितानां मितां धातूनां विषये विशेषेण उच्यते। पूर्वमेव प्रतिपादितं यत् घटादिगणे ये धातव: पठिता: तेषां 'घटादयो

ISSN 2456-3420

मितः' इत्यनेन मित्त्वं भवति। मित्त्वात् 'मितां ह्रस्वः' (अष्टा. - 6.4.92) इत्यनेन णौ अङ्गस्य ह्रस्वो भवति।परन्तु एते धातवः अर्थविशेषे एव मितः भवन्ति। यथा हि -स्मृ आध्याने - स्मृधातुः अध्यानेऽर्थे मित् भवति। आध्यानमुत्कण्ठापूर्वकं स्मरणम्। तेन मित्त्वात् णौ परे ह्रस्वः भवति। यथा आध्याने 'स्मरयति' इति। परन्तु अन्यत्र चिन्तादौ तु 'स्मारयति' इति रूपं भवति। अत्र ह्रस्वो न।दॄ भये -भयार्थकः दॄधातुः मित् भवति। यथा 'दृणन्तं प्ररयति' इति। भयादन्यत्र तु 'दारयति'। 'दॄ विदारणे' इति क्रादेरयं मित्त्वार्थोऽनुवादः। अन्येषां मते तु धात्वन्तरमेव। तत्र दरतीत्यादि रूपम्।ज्ञा मारणतोषणनिशामनेषु -एष्वर्थेषु एव ज्ञाधातुः मित। तेन 'मितां ह्रस्वः'इत्यनेन ह्रस्वे 'पशुं संज्ञपयति' अक्षतं मारयति इत्यर्थः।'हरिं ज्ञपयति' सन्तोषयतीत्यर्थः।रूपं ज्ञपयति दर्शयति, बोधयति वेत्यर्थः। केचन अत्र निशानेषु इति पठन्ति। यथा'शरं ज्ञपयति' तीक्ष्णीकरोति इत्यर्थः।चलिः कम्पने -चलधातुः कम्पनार्थे मिद् भवति।'चलयति शाखाम्' कम्पयतीत्यर्थः। कम्पनादन्यत्र तु मित्त्वाभावात् ह्रस्वो नभवति ।'चालयति सूत्रं' क्षीपतीत्यर्थः।'शीलं चालयति' अन्यथाकरोतीत्यर्थः। हरतीति क्षीरस्वामी।छदि ऊर्जने - 'छद अपवारणे'इति यो धातुः चुरादिगणे युजादौ पठितः, तस्य 'आ धृषाद्वा' इति स्वार्थिकणिजभावपक्षे ऊर्जनेऽर्थे मित्त्वार्थोऽनुवादः। अनेकार्थत्वाद् ऊर्जनेऽर्थे मित्तवार्थं घटादिगणे पठितः।'छदन्तं प्रयुङ्क्ते छदयति' बलवन्तं प्राणवन्तं वा करोतीत्यर्थः। अन्यत्र अपवारणेआच्छादने वा मित्त्वाभावाद् 'छादयती'ति।लडि जिह्वोन्मथने -'लड विलासे' इत्यस्यैवजिह्वोन्मथनेऽर्थे मित्तवार्थमनुवादः। यथा 'लडयति जिह्वाम्' रसानां रसान् ज्ञापयतीत्यर्थः।अन्यस्मिन्नर्थेमित्वाभावान्न ह्रस्वः। यथा 'लाडयति पुत्रम्' क्रीडयतीत्यर्थः।मदी हर्षग्लेपनयोः - हर्षग्लेपनयोरर्थयोः मदधातुर्मिद् भवति। तेन णौ 'मितां ह्रस्वः'इति ह्रस्वो भवति।'मदयति' हर्षयति ग्लेपयति वेत्यर्थः। अन्यत्र'मादयति' इति। चित्तविकारमुत्पादयतीत्यर्थः।ध्वन शब्दे -ध्वनधातु शब्देऽर्थे मित् भवति। तेन मित्त्वात् ह्रस्वः। यथा हि'ध्वनयति घण्टाम्' शब्दायमानां करोतिइत्यर्थः। अन्येष्वर्थेषु मिन्न। तेन 'ध्वानयति' अस्पष्टाक्षरमुच्चारयतीत्यर्थे ह्रस्वो न।स्वन अवतंसने-अवतंसनेऽर्थे स्वनधातुः मित। यथा हि 'स्वनयति'भूषयतीत्यर्थः। अत्र अवतंसनार्थे मित्त्वात् ह्रस्वः। 'स्वानयति' इत्यत्र शब्दार्थत्वान्न मित।शमो दर्शने - दैवादिकः शम उपशमे धातुर्दर्शनेऽर्थे मिन्न भवति । 'निशामयति रूपम्'पश्यतीत्यर्थः। उपशमे तु मित। तेन 'शमयति' इत्यत्र णौ ह्रस्वः।यमोऽपरिवेषणे - यमधातुः भोजनतोऽन्यत्र मिन्न स्यात। यथा हि 'आयामयति' द्राघयति व्यापारयति वेत्यर्थः। परिवेषणे तु 'यमयति ब्राह्मनान्', मित्त्वात् ह्रस्वः। स्खदि अवपरिभ्यां च -अव परि इत्येताभ्यामुत्तरः स्खदिर्धातुर्मिन्न भवति। यथा हि अवस्खादयति, परिस्खादयति। अन्यत्र मिद् भवति स्खदयति। एवं एवञ्च समासेन 'धातूनामन्तर्गणविभागः तत्र पाठफलञ्च' इति सूत्रं यथामति अल्पीयसा वचसा प्रतिपादितम् इति दिक्।

## परिशीलितग्रन्थसूची


1. नामलिङ्गानुशासनम् अमरटीकासर्वस्वव्याख्यामेतम्; अमरसिंहः; टि. गणपतिशास्त्री (संस्कर्ता); महामहिमश्रीमूलकरामवर्मकुन्दशेम्बर-महाराजशासनेन राजकीयमुद्रणयन्त्रालयं मुद्रयित्वा प्रकाशितम्; 1914।
2. अष्टाध्यायी;पाणिनिः; गोपालदत्तपाण्डेयः (सम्पादकः); वाराणसी- चौखम्बा-सुरभारती- प्रकाशनम्; 2009।
3. आख्यातचन्द्रिका;भट्टमल्लः; वेङ्कटरङ्गनाथस्वामी (सम्पादकः); वाराणसी- चौखम्बा- संस्कृत-सीरीज-आफिस; 1997।
4. कविकल्पद्रुमः धातुदीपिकाव्याख्यासहितः;वोपदेवः; आशुबोधविद्याभूषणः (संस्कृतः); कलिकाता- सिद्धेश्वरयन्त्रम्; 1904।
5. क्षीरतरङ्गिणी;क्षीरस्वामी; युधिष्ठिरमीमांसकः (सम्पादकः); रेवली, सोनीपत- रामलाल- कपूर-ट्रस्ट; 2009।
6. दैवं पुरुषकारसमेतम्;देवः; गणपतिशास्त्री (सम्पादकः); त्रिवेन्द्रम्-त्रिवाङ्कुर-सर्वकारीय- मुद्रणसंस्था; 1905।
7. धातुपर्यायसङ्ग्रहः;ब्रह्मानन्दत्रिपाठी; वाराणसी- चौखम्बा-सुरभारती-प्रकाशनम्; 1983।
8. धातुपाठः धात्वर्थप्रकाशिकासमन्वितः;पाणिनिः; कणकलालशर्मा (सम्पादकः); वाराणसी- चौखम्बा-संस्कृत-सीरीज-आफिस; 1969।
9. धातुपाठों में अर्थनिर्देश;माया ए. चैनानी; दिल्ली- विद्यानिधि प्रकाशन; 2008।
10. धातुसूत्रपाठसहित पाणिनीय धात्वनुक्रम कोश;अवनीन्द्रकुमार; दिल्ली-परिमल पब्लिकेशन्स; 2009।
11. निरुक्तम् ऋज्वर्थाख्यावृत्तिसमेतम्;महर्षियास्कः; ज्ञानप्रकाशशास्त्री (सम्पादकः); दिल्ली- परिमल-पब्लिकेशन्स; 2016।
12. माधवीया धातुवृत्तिः;सायणः; स्वामी द्वारिकादासशास्त्री (सम्पादकः); वाराणसी- तारा-बुक-एजेन्सी; 2000।
13. मालतीमाधवं गङ्गासंस्कृतहिन्दीव्याख्योपेतम्;भवभूतिः; गङ्गासागरराय: (सम्पादकः); वाराणसी- चौखम्बा-संस्कृत-विद्याभवनम्; 2014।
14. वैयाकरणसिद्धान्तकौमुदी बालमनोरमातत्त्वबोधिनीसहिता;भट्टोजिदीक्षितः; गिरिधरशर्मा परमेश्वरानन्दः च (सम्पादकः); वाराणसी- मोतिलाल-बनारसीदासः; 2010।
15. व्याकरण दर्शनेर इतिहास;गुरुपदहालदारः; कलिकाता- संस्कृत-बुक-डिपो; 2006।
16. शाब्दिकाभरणम्;हरियोगी; देवानन्दशुक्लः (सम्पादकः); नवदेहली-राष्ट्रिय-संस्कृत- संस्थानम्; 2010।
17. संस्कृत व्याकरण शास्त्र का इतिहास (द्वितीयः भागः);युधिष्ठिरमीमांसकः; रेवली, सोनीपत- रामलाल कपूर ट्रस्ट; 1984।
18. संस्कृतवाङ्मय का बृहद् इतिहास (पञ्चदशखण्डः);बलदेव-उपाध्यायः; लखनऊ- उत्तरप्रदेश संस्कृत संस्थान; 2001।

19. संस्कृतव्याकरणशास्त्रेतिहासविमर्शः;अशोकचन्द्रगौडशास्त्री; वाराणसी- भारतीय-विद्या- संस्थानम्; 2019।

20. संस्कृतव्याकरणे धातुविज्ञानम्;कन्हैयालालशर्मा; जयपुरम्- व्यास- बालबक्ष-शोध- संस्थानम्; 1992।

## पादटिप्पणी

1. ''ज्वलादिगणः समाप्तः'' इति सिद्धान्तकौमुद्यां 'कस गतौ' इति धातुः। पृ. - 290
2. अयमभावेऽपिवर्तते।
3. अयं गतावपि वर्तते।
4. योऽयं वृद्धिशैर्घ्ययोरनुदात्तेत्सु पठितः, तस्येहार्थविशेषे मित्त्वार्थोऽनुवादः।
5. कदिक्रदिक्लदीनामाह्वानरोदनयोः परस्मैपदिषूक्तानां पुनरिह पाठो मित्त्वार्थ आत्मनेपदार्थश्च।
6. 'हेडृ अनादर' इत्यात्मनेपदिषु गतः स एवोत्सृष्टानुबन्धोऽनूद्यते अर्थविशेषे मित्त्वार्थम्। परस्मैपदिभ्यो ज्वरादिभ्यः प्रागेवानुवादे कर्तव्ये तन्मध्येऽनुवादसामर्थ्यात्परस्मैपदम्।
7. 'वट वेष्टने','भट भृतौ' इति पठितयोः परिभाषणे मित्त्वार्थोऽनुवादः।
8. इत्थमेव पूर्वमपि पठितम्। तत्रायं विवेकः - पूर्वं पठितस्य नाट्यमर्थः। यत्कारिषु नटव्यपदेशः। वाक्यार्थाभिनयो नाट्यम्। घटादौ तु नृत्यं नृत्तं चार्थः। यत्कारिषु नर्तकव्यपदेशः। पदार्थाभिनयो नृत्यम्। गात्रविक्षेपमात्रं नृत्तम्। केचित्तु घटादौ नट नताविति पठन्ति। गतावित्यन्ये। णोपदेशापर्युदासवाक्ये भाष्यकृता नाटीति दीर्घपाठाद् घटादिर्णोपदेश एव।
9. तृप्तिप्रतीघातयोः पूर्वं पठितस्य तृप्तिमात्रे मित्त्वार्थोऽनुवादः। आत्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात्परस्मैपदम्।
10. अस्यायमर्थः इति विशिष्य नोच्यते, क्रियासामान्यार्थत्वात्। अन्येषां मते अनेकार्थत्वादस्य कोऽपि विशिष्टोऽर्थो नोच्यते।
11. 'दॄ विदारणे' इति क्रादेरयं मित्त्वार्थोऽनुवादः। दृणन्तं प्रेरयति दरयति। भयादन्यत्र दारयति। धात्वन्तरमेवेदमिति मते तु दरतीत्यादि।
12. 'घटादिः समाप्तः' इति सिद्धान्तकौमुद्यां 'फण गतौ' इति धातुः। पृ.- 288
13. अयं छेदनेऽपि वर्तते। यथा 'केशान् वपति' इति।
14. 'भ्राजतेरिह पाठः फणादिकार्यार्थः' इति सिद्धान्तकौमुद्यां 'टुभ्राजृदीप्तौ' इति धातुः। पृ.- 288
15. 'वी गतौ' इत्यनेन तुल्येऽर्थे वर्तते इत्यर्थः।
16. 'रुदादयः पञ्च गताः' इति सिद्धान्तकौमुद्यां 'जक्ष भक्षहसनयोः' इति धातुः। पृ.- 307
17. विभाषित इत्युभयपदीत्यर्थः। यथा 'शक्यति शक्यते वा हरिं द्रष्टुं भक्तः' इति।
18. 'पुषादयस्तु आ गणन्तादिति सिद्धान्तः' इति सिद्धान्तकौमुद्यां 'ष्णिह प्रीतौ' इति धातुः। पृ.- 317
19. 'पुषादयो दिवादयश्च वृत्ताः। केचित्तु पुषादिसमाप्त्यर्थमेव वृत्करणम्। दिवादिस्तु भ्वदिवदाकृतिगणः। तेन क्षीयते मृग्यतीत्यादिसिद्धिः' इति सिद्धान्तकौमुद्यां 'गृधु अभिकाङ्क्षायाम्' इति धातुः। पृ.- 318
20. 'शमादयोऽष्टौ गताः' इति सिद्धान्तकौमुद्यां 'मदी हर्षे' इति धातुः। पृ.- 317
21. 'रध, नश, तृप, दृप, द्रुह, मुह, ष्णुह, ष्णिह् एभ्यो वलाद्यार्धधातुकस्य वेट् स्यात्' इति सिद्धान्तकौमुद्यां 'रधादिभ्यश्च' इति सूत्रवृत्तौ भट्टोजिदीक्षितेन उक्तम्।
22. 'रधादयः समाप्ताः' इति सिद्धान्तकौमुद्यां 'ष्णिह प्रीतौ' इति धातुः। पृ.- 317
23. 'मुचादयस्तुदादयश्च' इति सिद्धान्तकौमुद्यां 'पिशि अवयवे' इति धातुः। पृ.- 325
24. 'कुटादयो वृत्ताः' इति सिद्धान्तकौमुद्यां 'कुङ्शब्दे इति धातुः।पृ.- 323
25. 'सिद्धान्तकौमुद्यां भट्टोजिदीक्षेतेन उक्तं 'शे तृम्फादीनां नुम्वाच्यः' (वा. 4323)। आदिशब्दः प्रकारे। तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः' इति। पृ.- 322
26. केषाञ्चिन्मते तु 'व्री वरणे', 'भ्री भरणे', 'क्षीष् हिंसायाम्' इत्येतेषां त्रयाणां प्वादिगणे पाठो नास्ति।
27. 'कुस्म' इति धातुः कुत्सितस्मयने वर्तते। अथवा 'कुस्म' इति प्रातिपदिकम्। ततो धात्वर्थे णिच् इति सिद्धान्तकौमुद्यां 'कुस्म नाम्नो वा' इति धातुः।
28. 'इत्यागर्वीयाः' इति सिद्धान्तकौमुद्यां 'गर्व माने' इति धातुः। पृ.- 339
29. इत्याधृषीयाः इति सिद्धान्तकौमुद्यां 'धृष प्रहसने' इति धातुः। पृ.- 338

*Dr. Joydeb Dinda*
*Guest Lecturer*
*La&mi Devi Shroff Adarsh Sanskrit College*
*Harisharanam Kutir, Kalirakha*
*B. Deoghar, Jharkhand*

ISSN 2456-3420

# तिङन्तेषु लोपपरम्परा

नितिन शर्मा

**नमो लोप्याय चोलप्याय च[1]**

सर्वप्रथम व्याकरणदर्शनस्य आगमविकारप्रक्रियाया: सम्भावनां य: उत्पन्न: करोति एतादृश: लोपस्य बीजरुपेण, वेदेषु शङ्करस्य पर्यायं स्वीकृत्य तं नमस्कारं चकार।

व्याकरणशास्त्र: शब्दस्य स्वरूपस्य सिद्धये निर्मित: एका काल्पनिका प्रक्रिया मन्यते। व्याकरणे लोपस्य प्रयोगेण अभीष्टरुपसिद्धौ अनिष्टानां ध्वनीनां निवारणमात्रं वर्तते। शास्त्रे लोपस्य बहव: नामानि सन्ति यथा- लोप:, खं, अपाय: विनाश: इत्याद्य:। एतेषां नाम्नाम् उद्देश्य: वर्तते यत् शब्दशास्त्रस्य प्रक्रिया भवेत् एव। लोपस्य अर्थात् आकाशस्य (शून्यस्य) सार्वभौमिकता सर्वै: स्वीकुर्वन्ति। अस्य शब्दस्य सत्ता वैदिककालात् आरम्भं कृत्वा अद्यावधि पर्यन्तं सर्वै: स्वीकुर्वन्ति।

**लोपस्य अर्थ: एवं परिभाषा-**

लोप: लुप् धातो: घञ् प्रत्यय: कृत्वा निष्पन्नं भवति। यदा ध्वने: वा वर्णस्य अनुच्चारणं क्रियते तदा तस्य नाम लोप: अस्ति। परञ्च अनुच्चारणात् अनन्तरम् अपि स: वर्ण: तत्रैव विद्यते। पाणिनीय सूत्रपाठे लोपसंज्ञाया: बोधक: सूत्र: अस्ति - अदर्शनं लोप:[2], जैनेन्द्रव्याकरणस्य सूत्रं वर्तते - नाश: खम्[3]। पतञ्जले: महाभाष्ये लोपस्य अन्य नाम अभाव:[4]।

**किं नाम तिङन्त: -**

पाणिनीयाष्टाध्याय्यां पठित तिप्तस्झि....[5] इत्यादि अष्टादशप्रत्ययेषु 'तिप्' प्रत्ययस्य 'ति' इति शब्दत: 'महिङ्' इति पर्यन्तं तिङ्प्रत्याहारं भवति। तिङन्तरुपेण ये शब्दा: सन्ति तेषां पदसंज्ञा भवति। अत: पाणिनीयव्याकरणे आख्यातं तिङन्तं उच्यते।

धातुपाठे ये धातव: पठित: तेषां सार्धं प्राय: अनुबन्धा: सन्ति एव तेषाम् अनुबन्धानाम् इत्संज्ञा भूत्वा लोप: भविष्यति। अनुबन्धानां परम्परा तिङन्तपदानां रचनाकाले लोपस्य परम्परा सोद्देश्यम् अस्ति। एषा परम्परा अद्भुता वर्तते। यथा- यत् धातव: ङित् सन्ति ते आत्मनेपदं प्राप्नुवन्ति ये धातव: ञित् सन्ति ते उभयपदं प्राप्नुवन्ति। तिङन्तपदेषु लोपस्य प्रभाव: अग्रे स्पष्टं भविष्यति।

**1. ङित् लकारे प्रत्ययावयवानां नित्यलोपपरम्परा**

क. इकारलोप:-'ङित्' लकारेषु इकारस्य (प्रत्ययावयव:) नित्यलोप: भवति।[6] यथा-अपचन्। अस्मिन् उदाहरणे अपच् + अन्ति (झि) इत्यावस्थायां 'अन्ति' इत्यस्य इकारस्य लोपं भूत्वा अन्त् शेषं भवति तत्पश्चात् संयोगान्तस्य लोप: भूत्वा लङ् लकारे अपचन् पदं भवति। ङित् लकारे लङ् लिङ् लुङ् लृङ् च विद्यते। उक्तलकारेषु इकारस्य लोप: अनिवार्यत: वर्तते। यदा लोपं न कुर्म: तदा अनिष्टं रुपं भविष्यति।

ख. सकारलोप:-'ङित्' लकारेषु उत्तमपुरुषस्य सकारस्य नित्यलोप: भवति।[7] यथा-अपचाव, अपचाम अस्मिन् उदाहरणे 'वस्', 'मस्' प्रत्यययो: सकारस्य नित्यं लोपं भूत्वा लङ् लकारे 'अट् पच् अ व', 'अट् पच् अ म' इति रूपं भवति तत्पश्चात् दीर्घं जातम् अत: रूपं वर्तते अपचाव अपचाम च।

**2. वेदेषु वैकल्पिकलोप:-**

क. परस्मैपदस्य लट् लकारे इकारस्य विकल्पेन लोपं वर्तते।[8] यथा-भविषत् / भविषति, भविषात्/भविषाति इत्याद्य:।

ख. लेट् लकारे उत्तमपुरुषस्य सकारस्य लोप: विकल्पेन क्रियते।[9] यथा - करवाव/ करवाव:, करवाम/ करवाम:।

ग. घुसंज्ञक अङ्गस्य लेट् लकारे विकल्पेन लोप: दृश्यते।[10] यथा - दधत् / दधात्, ददत्/ ददात्। दधद्रत्नानि दाशुषे।[11] सोमो ददद् गन्धर्वाय।[12]

परञ्च काशिकायां तु आट् आगमं कृत्वा ददात् इति रूपमेव भविष्यति न तु ददत्।[13]

**3. लोट् लकारे 'हि' इत्यस्य लुक् व्यवस्था-**

लोट् लकारे हि इत्यस्य लुक् भवति-पठ पच गच्छ धाव इत्यादि धातुषु हि लुक् दृश्यते परञ्च युहि रुहि इत्यादि रूपेषु 'हि' इत्यस्य लुक् न दृश्यते यतोहि अत्र अकारान्ताङ्गं न दृष्ट्वा उकारान्ताङ्गं वर्तते। अत: उकारान्ताङ्ग: लोपस्य बाधकम् अस्ति।[14] 'हि' इत्यस्य यदा लुक् भवति तदा 'हि' सन्धिकार्ये बाधकं न भवति। यथा - भव+इति भवेति।

परञ्च कुत्रचित् उकारान्तस्य प्रत्ययस्य यदा उकारस्य पूर्वे संयोग: न भवति एवं परे लोट् लकारात् युक्त: 'हि' भवति तदा तस्य लुक् भविष्यति।[15] यथा-शृणु, चिनु, सुनु, कुरु इत्याद्य:। एतेषु उदाहरणेषु उकारात् पूर्वे संयोग: नास्ति अत: 'हि' इत्यस्य लोपं जातम्।

**4. धातो: संसक्त: नकारलोप:-**

क. 'शप्' यदा परे भवति तदा दंश्, संज्, स्वञ्ज्, रञ्ज् इत्यादिषु धातुसु नकारस्य लोपो भवति।[16] यथा-दशति, सजति, अदशत् इत्याद्य:। परन्तु णिजन्तावस्थायां तु अनुनासिकस्य लोप: न भवति। यथा-रञ्जयति इत्याद्य:। उभयत्र लोप: साधक: बाधकश्च भवति।

ख. यस्य इकार: इत्संज्ञक: न अस्ति एतादृश: हलन्तानां धातूनां उपधाभूतस्य नकारस्य लोप: भवति यदा कित् ङित् च प्रत्यया: परे भवति।[17] यथा - स्रस्त:, ध्वस्त:, सनीस्रस्यते।

ग. श्नम् विकरणप्रत्ययात् परे नकारस्य लोप: भवति।[18] यथा- इन्धे (इन्ध् ते> इ श्नम् न्ध ते> इन् न्ध ते अत्र नकारस्य लोप: वर्तते।) इत्थं प्रकारेण अनक्ति, भनक्ति, हिनस्ति इत्याद्य:।

**5. विकरणस्य उकारस्य लोप: -**

क. डुकृञ् करणे धातो: परे प्रत्ययस्य उकारस्य नित्यलोप: भवति, यदा मकारवकारयो: परे।[19] यथा - कुर्व:, कुर्म:, कुर्वहे, कुर्महे।

ख. यकारादि प्रत्ययात् परे 'कृ' धातो: परे 'उ' प्रत्ययस्य लोप: भवति।[20] यथा- कुर्यात्, कुर्याताम् इत्याद्य:।

ग. 'उकारस्य' वैकल्पिकः लोपः-एतादृशः उकारान्तप्रत्ययः यस्य उकारस्य पूर्वे संयोगः न भवेत् एवं यदा तस्य परे मकारवकाराद्यः प्रत्ययाः भवेत् तदा उकारस्य विकल्पेन लोपः वर्तते।[21] यथा - शृणुमः/ शृण्मः, शृणुवः/ शृण्वः इत्याद्यः।

**6. अकाराकारयोः लोपः-**

क. आर्धधातुकप्रत्ययः परे भवति तदा अदन्ताङ्गस्य अकारस्य लोपः दृश्यते।[22] यथा धिनोति, धिनुतः। उदाहरणे अस्मिन् आर्धधातुकः परे भूत्वा अकारस्य लोपं जातम्।

ख. अजाद्यः कित् ङित् च प्रत्ययाः परे भवति तदा 'गम्, हन्, जन्, खन् घस् च' धातूनाम् उपधायाः अकारस्य लोपं क्रियते, परञ्च 'अङ्' प्रत्ययः यदा भवति तदा उपधायाः लोपं न क्रियते।[23] यथा- जग्मुः, जघ्नतुः, जज्ञे, चख्नतुः, घ्नन्ति इत्याद्यः।

ग. 'श्नम्' विकरणस्य अकारस्य एवं अस् धातोः अकारस्य कित् ङित् सार्वधातुकात् परे लोपं क्रियते।[24] यथा - रुन्धः, रुन्धति, स्तः सन्ति इत्याद्यः।

घ. 'श्ना' विकरणप्रत्ययस्य एवं अभ्यस्त धातोः आकारस्य लोपं दृश्यते यदा कित् ङित् सार्वधातुकात् परे भवति।[25] यथा- श्ना- लुनते, लुनताम्, अलुनत। अभ्यस्त धातोः - मिमते, संजिहते।

ङ यकाराद्यः सार्वधातुकात् परे यदि 'हा' (ओहाक्) धातुं भवति तर्हि धातोः आकारस्य लोपः दृश्यते।[26] यथा - जह्यात्, जह्याताम्, जह्युः इत्याद्यः। इत्थं प्रकारेण डुदाञ् धातोः दद्यात्।

च. 'दरिद्रा' धातोः आकारस्य लोपोऽपि भवति आर्धधातुक-प्रत्ययस्य विवक्षायाम्।[27] यथा - दरिद्रितास्मि, दरिद्रिष्यामि इत्याद्यः।

**7. सकार-लोपः**

क. धकारः यदि प्रत्ययस्य आदौ भवति तदा 'सिच्' इत्यस्य अकारस्य लोपः दृश्यते।[28] यथा- अलविध्वम्, अपविध्वम्।

| | | | | |
|---|---|---|---|---|
| अट् | लू | इट् | सिच् | ध्वम् |
| अ | लो | इ | स् | ध्वम् |
| अ | लव् | इ | स् | ध्वम् |
| अ | लव् | इ | | ध्वम् - अलविध्वम् |

उदाहरणेऽस्मिन् 'सिच्' इत्यस्य सकारात् परे धकाराद्यः प्रत्ययः 'ध्वम्' अस्ति अतः सकारस्य लोपः अभवत्। अत्र लोपः अनावश्यकध्वनेः परिष्कारकम् अकरोत्। इत्थं प्रकारेण अन्याषां तिङन्तपदानां रचना कालेऽपि ज्ञातुं शक्यते।

ख. 1. 'तास्' प्रत्ययस्य एवं अस् धातोः सकारस्य लोपः भवति यदि सकारादि प्रत्ययः परे भवति दृश्यते।[29] यथा - कर्तासि। कर्तासे। असि इत्याद्यः।

ख. 2. रेफादि प्रत्ययः यदा परे भवति तर्हि अपि 'तास्' प्रत्ययस्य एवं अस् धातोः सकारस्य लोपः क्रियते।[30] यथा - कर्त्तारौ, कर्त्तारः इत्याद्यः।

ग. ह्स्वान्ताङ्गात् 'अल्' परे भवति तर्हि सकारस्य लोपः दृश्यते।[31] यथा - अकृत, अकृथाः इत्याद्यः।

घ. लिङ्-लकारे सीयुट् आगमः भवति।[32] यथा - पचेत। 'पच् शप् सीयुट् सुट् त,' 'पच् अ सीय् स् त' इत्यत्र द्वयोः सकारयोः लोपं भूत्वा[33] 'पच् ईय् त' रुपं निर्मीयते, तत्पश्चात् गुणं कृत्वा यकार लोपं च कृत्वा पचेत इति रुपं भवति।

**8. 'क्स' इत्यस्य वैकल्पिकलोपः -**

दन्त्याक्षराः यस्य आदौ विद्यते एतादृशः आत्मनेपदप्रत्ययेभ्यः परे 'दुह, दिह, लिह, गुहू च' चतुसु धातुसु 'क्स' इत्यस्य विकल्पेन लुक् भवति।[34] इत्थं प्रकारेण आत्मनेपदे तवर्गादि एवं वकारादि प्रत्ययानां ग्रहणमेव करोति। यतोहि लुक् संज्ञा सम्पूर्ण प्रत्ययस्य अदर्शनस्य वर्तते, न तु एकादेशस्य अतः लुक् मात्रोच्चारणेन सम्पूर्ण 'क्स' इत्यस्य लुक् भवति। यथा -

1. दुह् प्रपूरणे-अदुग्ध / अधुक्षत, अदुग्धाः/ अधुक्षथाः, अधुग्ध्वम् / अधुक्षध्वम्।
2. दिह् उपचये - अदिग्ध / अधिक्षत
3. लिह् आस्वादने - अलीढ / अलिक्षत
4. गुहू संवरणे - न्यगूढः / न्यधुक्षत

**9. तिङन्तपदानां निर्माणे लुकः महत्त्वम् -**

यदा उकारान्ताङ्गस्य लुक् भवति एवं तत्पश्चात् हलादि पित् सार्वधातुकः भवति तदा वृद्धिरेकादेशः दृश्यते।[35] उकारान्ताङ्गस्य शपः लुक् यदा भवति तदैव उकारं वृद्धिरेकादेशः दृश्यते तथा शपनन्तरं हलादि पित् सार्वधातुप्रत्ययः अपि अपेक्षितः। यथा - स्तौति, यौति, नौति इत्याद्यः।

**10. ओकारान्त धातोः ओकारस्य लोपः -**

ओकारान्तानां धातूनांओकारस्य लोपं दृश्यते यदा 'श्यन्' प्रत्ययः परे भवति।[36] यथा- शो तनूकरणे - शो य (श्यन्) तिप् >श् य ति > श्यति।

**11. 'शप्' विकरणस्य श्लु -**

जुहोति अर्थात् हु धातोः कर्तृवाचकात् सार्वधातुकात् परे शप्प्रत्ययं श्लु क्रियते।[37] श्लु इत्यस्यार्थः अस्ति लोपः। यथा - जुहोति > हु शप् ति > हु श्लु ति > हु * ति > हु हु ति > झु हुति > जुहुति> जुहोतिइत्याद्यः। उदाहरणेऽस्मिन् यदि शप् इत्यस्य श्लु न करिष्यते तर्हि धातुं द्वित्वं न भवति। अतः शप् इत्यस्य श्लुः कृत्वा लोपस्य प्रयोजनं सिद्धं भवति।

**12. वेदे आत्मनेपदस्य तकारस्य लोपः -**

आत्मनेपदे यत् तकारः तस्य वेदविषये लोपः दृश्यते।[38] यथा - देवा अदुह्र।[39]

प्रायशः आत्मनेपदप्रत्ययस्य वेदे विकल्पेन लोपः क्रियते। ते> ए। शेते >शये।

**13. णिचः लोपः -**

अनिट् एवं सेट् धातूणां सन्दर्भे आचार्यः पाणिनि णिचः लोपाय द्वयं नियमः निर्मितः -

1. अनिडादि आर्धधातुकः यदा परे भवति तदा णिचः लोपं क्रियते।[40] इयङ् यण,

गुण:, वृद्धि:, दीर्घ: च इत्यस्य अपवाद: भवति। यथा – अततक्षत्, अररक्षत, आटिटत् इत्याद्य:।

2. सेट् निष्ठा परे भवति णिच: लोपं दृश्यते।[41] यथा – कारितम्, हारितम्, गणितम्, लक्षितम् इत्याद्य:।

**14. निष्कर्ष:–**

पाणिनीय व्याकरणे क्रियापदनां संज्ञाया: अपरं नाम तिङन्त: अपि उच्यते। धातुपाठे पठित: प्रायश: सर्वै: धातुभि: सह अनुबन्धानां प्रयोगं चकार, एतादृश: प्रयोग: सप्रयोजन: सोद्देश्यश्च वर्तते। यथा –

येषां धातूनाम् उदात्त: – अ, आ, इ, ई, उ, ऊ, ऋ लृ, ए, ओ एतादृश: अनुबन्धा: इत्संज्ञका: भवन्ति तेषां परस्मैपदसंज्ञारुपेण प्रयोगं दृश्यते। येषां धातूनाम् उपरिलिखिता: अनुदात्ता: स्वरा: ङकारश्च इत्संज्ञका: सन्ति तेआत्मनेपदं प्राप्नुवन्ति। येषां धातूनाम् अकार: ञकारश्च इत्संज्ञका: भवन्ति ते: उभयपदं प्राप्नुवन्ति। परञ्च वेदेषु तु स्थिति भिन्ना: एव सन्ति।

अत: तिङन्तपदेषु रचनाकाले लोपस्य विशिष्ट: प्रभाव: वर्तते।

## सन्दर्भ ग्रन्थ सूची


1. अष्टाध्यायीसूत्रपाठ:, सम्पादक, सुधीर कुमार मिश्र, विद्यानिधि प्रकाशन, दिल्ली, 2016
2. ऋग्वेद (तीसरा चौथा एवं पांचवां मण्डल), गोविन्द चन्द्र पाण्डे, लोकभारती पुस्तक विक्रेता तथा वितरक, इलाहाबाद, 2008
3. ऋग्वेदसंहिता, व्याख्याकार डॉ. जियालाल कम्बोज, विद्यानिधि प्रकाशन, दिल्ली, 2013
4. काशिका व्याख्याकार: डॉ ? रघुवीर वेदालङ्कार:, चौखम्भा ओरियन्टालिया दिल्ली, 2010
5. कृष्णयजुर्वेदीय तैत्तिरीय-संहिता मन्त्रा:, R.L.Kashyap, Sri AurobindoKapaliSastry Institute of Vedic Culture, Bangalore, 2005
6. जैनेन्द्रमहावृत्ति:, सम्पादक पण्डित शम्भुनाथ त्रिपाठी, भारतीय ज्ञान पीठ, काशी, 1956
7. व्याकरणमहाभाष्यम्, व्याख्याकार प्रोफेसर भीमसिंह वेदालङ्कार, विद्यानिधि शोधसंस्थान, कुरुक्षेत्र, 2013


## पादटीका

1 तैत्तिरीय संहिता 4.5.9.10 (पृष्ठ 402)
2 अष्टाध्यायी 1/1/60 (पृष्ठ-7)
3 जैनेन्द्र महावृत्ति 1/1/61 (पृष्ठ – 14)
4 अभावो लोप:। महाभाष्य (अष्टाध्यायी –1/4/110) भाग-2 पृष्ठ 1240
5 तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् (अष्टाध्यायी 3/4/78 पृष्ठ 171)
6 इतश्च (अष्टाध्यायी 3/4/100 पृष्ठ 173)
7 नित्यं ङित: (अष्टाध्यायी 3/4/99 पृष्ठ 173)
8 इतश्च लोप: परस्मैपदेषु (अष्टाध्यायी 3/4/97 पृष्ठ 173)
9 स: उत्तमस्य (अष्टाध्यायी 3/4/98 पृष्ठ 173)
10 घोर्लोपो लेटि वा (अष्टाध्यायी 7/3/70 पृष्ठ 513)
11 ऋग्वेद - 4.15.3 पृष्ठ- 446
12 ऋग्वेदसंहिता 10.85.41भाग 8, पृष्ठ 279
13 काशिकावृत्ति (अष्टाध्यायी 7/3/70) भाग-2 पृ ?सं ? 728
14 अतो हे: (अष्टाध्यायी- 6/4/105 पृष्ठ 464)
15 उतश्च प्रत्ययादसंयोगपूर्वात् (अष्टाध्यायी 6/4/106 पृष्ठ 464)
16 दंश-सञ्ज-स्वञ्जां शपि (अष्टाध्यायी 6/4/25 पृष्ठ 454)
17 अनिदितां हल उपधाया: क्ङिति (अष्टाध्यायी 6/4/24 पृष्ठ 453)
18 श्नान्नलोप: (अष्टाध्यायी 6/4/23 पृष्ठ 453)
19 नित्यं करोते (अष्टाध्यायी 6/4/108 पृष्ठ 464)
20 ये च (अष्टाध्यायी 6/4/109 पृष्ठ 464)
21 लोपश्चान्यतरस्यां म्वो: (अष्टाध्यायी 6/4/107 पृष्ठ 464)
22 अतो लोप: (अष्टाध्यायी 6/4/48 पृष्ठ 457)
23 गमहनजनखनघसां लोप: क्ङित्यनङि (अष्टाध्यायी 6/4/98 पृष्ठ 463)
24 श्नसोरल्लोप: (अष्टाध्यायी 6/4/111 पृष्ठ 464)
25 श्नाभ्यस्तयोरात: (अष्टाध्यायी 6/4/112 पृष्ठ 464)
26 लोपो यि (अष्टाध्यायी 6/4/118पृष्ठ 466)
27 दरिद्रातेरार्धधातुके विवक्षिते आलोपो वाच्य: (अष्टाध्यायी 4/4/114 वार्तिक)
28 धि च (अष्टाध्यायी 8/2/25 पृष्ठ 546)
29 तासस्तयार्लोप: (अष्टाध्यायी 7/4/50 पृष्ठ 525)
30 रि च (अष्टाध्यायी 7/4/51 पृष्ठ 525)
31. ह्रस्वादङ्गात् (अष्टाध्यायी 8/2/27 पृष्ठ 546 )
32. लिङ्स्सीयुट् (अष्टाध्यायी 3/4/102 पृष्ठ 173)
33. लिङ: सलोपोऽनन्त्यस्य (अष्टाध्यायी 7/2/79 पृष्ठ 497)
34. लुग्वा दुहदिहलिगुहामात्मनेपदे दन्त्ये (अष्टाध्यायी 7/3/73 पृष्ठ 513)
35. उतो वृद्धिर्लुकि हलि ( अष्टाध्यायी 7/3/89 पृष्ठ 515)
36. ओत: श्यनि (अष्टाध्यायी 7/3/71 पृष्ठ 513)
37. जुहोत्यादिभ्य: श्लु: (अष्टाध्यायी 2/4/75 पृष्ठ 78)
38. लोपस्त आत्मनेपदेषु (अष्टाध्यायी 7/1/41 पृष्ठ 479)
39. मैत्रायणी संहिता 4.2.1
40. णेरनिटि (अष्टाध्यायी 6/4/51पृष्ठ 457)
41. निष्ठायां सेटि (अष्टाध्यायी 6/4/52 पृष्ठ 457)


*शोधच्छात्र:*
*केन्द्रीयसंस्कृतविश्वविद्यालय:,*
*श्रीरणवीरपरिसर:कोटभलवाल: जम्मू:*

ISSN 2456-3420

# शङ्कराचार्याभिमतं समाधिस्वरूपविवेचनम् ( पञ्चीकरणग्रन्थालोके )

मानसी

वेदान्तशास्त्रपरम्परायां विविधाचार्यैः स्व-स्वदर्शनानुरूपं अद्वैततत्त्वानुसन्धानार्थं जपभक्तिध्यानसमाधीत्यादयः नैकाः उपायाः प्रदर्शिताः। शङ्कराचार्येण ब्रह्मवस्तुनः विवेचनार्थं जीवब्रह्मणोः परस्परम् ऐक्यसम्पादनार्थंच 'ब्रह्मसत्यं जगन्मिथ्या' इति सिद्धान्तं प्रतिपादितम्। अर्थात् ब्रह्म एव केवलं त्रैकालिकं सत्यम् एतच्च दृश्यमानमखिलं संसारम् असत्यरूपेण प्रतिभासते। सांसारिकाः प्राणिनः कर्मफलभोगार्थमुपाधिभूतशरीरे प्रविश्य भौतिकजगति आविर्भूत्वा अज्ञानवशाद्ब्रह्मणो नित्यशुद्धबुद्धमुक्तसत्यस्वभावं विस्मृत्य अनात्मदेहेन्द्रियादिषु पचभूतात्मकं जगदेव सत्यं (नित्यं) मन्यन्ते। प्रसङ्गेऽस्मिन् शङ्केयं भवति यद् जीवः स्वभावत एव सर्वदा मुक्तः सुखस्वरूपश्चास्ति तथा च ब्रह्मणस्तस्याभेदश्चेदुभयोर्मध्ये भेदप्रतीतेः कारणं किम्? अतो सृष्टेः कारणभूततत्त्वानुसन्धानाय शरीरोत्पत्तिसृष्टिप्रक्रिययोः ज्ञानमावश्यकम्। वस्तुत उपाधिभेदेन आत्मनि भेदस्य प्रतीतिरुत्पद्यते। वस्तुतत्त्वस्य दर्शनार्थं भेदनिवृत्त्यर्थञ्च समाधिरेव समीचीनं साधनं वर्तते। अयं सिद्धान्तः विवेकचूडामणौ प्रतिपादितः आचार्यशङ्करेण । यतोहि सर्वे परमहंससंन्यासिनः समाधिविधिना एव परब्रह्मणः साक्षात्कारं कृतवन्तः। आद्यशङ्कराचार्यैः 'पञ्चीकरणम्' इति नामके प्रकरणग्रन्थारम्भे परमहंससंन्यासिनां समाधिविधेस्स्वरूपं समाधये च पञ्चीकरणस्य प्रक्रियायाः निरूपणं कृतम्। शोधपत्रेऽस्मिन् पञ्चीकरणविधेः विवेचनं न कृत्वा पञ्चीकरणस्यालोके समाधेः विवेचनं क्रियते।

**समाधेर्व्युत्पत्तिलभ्योऽर्थः**-नैकाचार्यैः विविधेषु ग्रन्थेषु ध्यानप्रक्रियायाः साधनावलम्बनरूपे समाधेस्स्वरूपं परिभाषितम् अङ्गीकृतञ्च । शाब्दिकदृष्ट्या समाधिपदस्य निर्वचनम्- 'समाधीयतेऽस्मिन्निति समाधिः' अर्थात् धियः समत्वस्थितिः ब्रह्मणि चित्तस्य अवस्थानं वा समाधिः। यस्यामवस्थायां जीवः सांसारिकबाह्यपदार्थेभ्यः चित्तम् उन्मुखीकृत्य (शास्त्रनिषिद्धबहिर्मुखी-वृत्तीन् अन्तर्मुखीन् कृत्वा), योगाङ्गानि अनुसृत्य साधनचतुष्टयसम्पन्नो भूत्वा च ध्येयवस्तुनः सततरूपेण ज्ञातुं ध्यानवस्थायां लीनो भवति। अतएव मोक्षभावप्रदायिनी प्रकर्षध्यानयुता चित्तस्य सर्वोत्कृष्टावस्था एव समाधिः। श्रीमद्भगवद्गीतायाः शाङ्करभाष्ये समाधिपदस्य व्युत्पत्तिलभ्यौ अर्थौ द्वौ प्राप्येते। प्रथमव्युत्पत्त्यनुसारेण ''समाधीयते अस्मिन् पुरुषोपभोगाय सर्वम् इति समाधिः'' अर्थात् समाधिः नाम अन्तःकरणम्। द्वितीयव्युत्पत्त्यनुसारेण ''समाधीयते चित्तमस्मिन् इति समाधिः'' एतद्व्युत्पत्त्यनुसारम् आत्मनः नाम समाधिः।

पातञ्जलदर्शने महर्षिपतञ्जलिना द्विप्रकारकसमाधेः सम्प्रज्ञाता-सम्प्रज्ञातरूपेण स्वरूपं प्रतिपादितम्। एतौ एव समाधीयोगसञ्ज्ञया विभूषितौ यतोहि पाणिनीयव्याकरणानुसारेण व्युत्पत्तिदृष्ट्या योगपदस्यार्थः 'युज् समाधौ' इति धातुना समाधिरर्थः सिद्ध्यति। अत एव योगसूत्रभाष्यकारेण प्रख्यापितम्-'योगः समाधिः। स च सार्वभौमः चित्तस्य धर्मः' अर्थात् समाधेरर्थश्चित्तवृत्तिनिरोधः वर्तते। योगपदस्य गौणोऽर्थः एकाग्रताऽस्ति। समाधौ चित्तस्य सर्ववृत्तिनिरोधत्वात् (स्वस्वरूपशून्यत्वात) अखण्डागोचरानन्दैकरसरूपस्य ध्येयतत्त्वस्य प्रतीतिरेव समाधिः। पातञ्जलयोगदर्शने चित्तभूमिदृष्ट्या समाधेः भेदोपभेदाः प्राप्यन्ते। एतेषां क्षिप्त-मूढ-विक्षिप्त-एकाग्र-निरूद्धनामकचित्तभूमीनाम् अवस्थाविशेषेण नैकाः समाधयः भवन्ति, येषां सविस्तरं विवेचनं व्यासेन निजयोगसूत्रभाष्ये वर्णितम्। साधनादृष्ट्या सर्वेऽपि समाधिभेदाः योगसञ्ज्ञया कथयितुं न शक्यन्ते यतोहि क्षिप्त-मूढ-विक्षिप्तभूमीनां रजतमोगुणयोः आधिक्येन वा कदाचिद् सत्त्वगुणस्याधिक्येनापि रजोगुणस्यातिशये सति चित्तवृत्तीनां निग्रहणं मुहुर्मुहुर्खण्डितं भूत्वाल्पकालाय एव तिष्ठति। प्रसङ्गेऽस्मिन् सूत्रकारभाष्यकारयोः मते सम्प्रज्ञातासम्प्रज्ञातसमाधी एव योगसञ्ज्ञया कथयितुं शक्यते।

**पञ्चीकरणग्रन्थे समाधिस्वरूपम्**-अद्वैतसिद्धान्तेषु समन्वितं पञ्चीकरणप्रकरणग्रन्थेऽत्यन्तसङ्क्षिप्ततया समाधिपरिभाषा उल्लिखिता- 'अकार उकारे, उकारो मकारे, मकार ?कारे, ?कारोऽहम्येव। अहमात्मा साक्षी केवलश्चिन्मात्रस्वरूपः, नाज्ञानं, नापि तत्कार्यं, किन्तु नित्यशुद्धबुद्धमुक्तसत्यस्वभावं परमानन्दाद्वयं प्रत्यग्भूतचैतन्यं ब्रह्मैवाहमस्मीत्यभेदेनावस्थानं समाधिः।'

अर्थात् अकारस्य लयः उकारे, उकारस्य मकारे, मकारस्य ओङ्कारे, ओङ्कारस्य च अहमिति पदे लयः भवति। अयमात्मा सर्वाधिष्ठानरूपः स्वप्रकाशरूपोऽस्ति अर्थात् अयमात्मा अज्ञानरूपो न वर्तते, न च अज्ञानजनितकार्यभूतसंसाररूपोऽस्ति। अहम् इति पदेनाख्यम् अस्मत्प्रतीतिविषयत्वात् अयमात्मा जन्ममरणाविद्यादिरहितो ज्ञानरूपोऽविद्यासम्बन्धविहीनः सत्यस्वभावयुक्तो निरतिशयानन्दरूपः अद्वयः सर्वेषां प्राणिनां हृदयेषु अधिष्ठातृरूपः वर्तते। उक्तब्रह्मबोधक-वाक्यानां मननेन ब्रह्माकाराकारितचित्तस्याखण्डवृत्तिना ब्रह्मबोधोप-लब्धिः भवति। ग्रन्थकारेण पञ्चीकरणे पञ्चीकरणप्रक्रियान्तर्गत-स्थूलसूक्ष्मभूतानामारोहावरोहक्रमेण विलयं विज्ञाप्य जगतः मिथ्यात्वं ब्रह्मणः अभेदस्वरूपञ्च विवेचितमस्ति। 'ब्रह्मैवाहमस्मि' इति प्रकारेण प्रकर्षध्यानावस्थायां योगिनां तादात्म्यसम्बन्धावच्छिन्नाभेदज्ञाननिष्ठस्थितिः समाधिः। आचार्यनृसिंहसरस्वति- मतानुसारं व्युत्थाननिरोधसंस्कारयोर-भिभवप्रादुर्भावेसतिचित्तस्यैकाग्रतापरिणामः समाधिः।

**समाधिभेदः**-वेदान्तदर्शने तत्त्वानुसन्धानाय योगदर्शने च चित्तवृत्तिनिरोधाय मार्गः प्रशस्तः। तत्र प्राधान्येन चित्तवृत्तिनिरोधमार्गो व्याख्यातः। चित्तवृत्तिनिरोधाय समाधिर्द्विविधः प्रोक्तः-सम्प्रज्ञातासम्प्रज्ञातसमाधिश्च। एतयोरेव अपरनामानि सविकल्पः निर्विकल्पश्चेति। पञ्चीकरणस्य टीकाकारैः अप्येतयोः समाध्योः

स्वोपटीकासु वर्णनं कृतम्। 'पञ्चीकरणम्' प्रकरणग्रन्थे सृष्ट्योत्पत्तिप्रलयक्रमान् निरूपयन् साधनचतुष्टयसम्पन्न-साधकेभ्यः प्रणवमाध्यमेन आत्मानुसन्धानविधेरपि वर्णनं कृतवान् एतल्लेखकः। श्रवणमनननिदिध्यासनप्रयोगेऽपि संशयशून्यज्ञानानुत्पत्तौ परमहंससंन्यासिभ्यः समाधिरावश्यको वर्तते। श्रुतिप्रामाण्यमनुसरन् आचार्यशङ्करः उपर्युक्तसमाधिलक्षणे एतदर्थमेव प्रणवं समाधिभूतध्यानप्रक्रियाया आलम्बनत्वेन कथयति। समाधेर्विधानं श्वेताश्वतरोपनिषदः ऋषिणा अपि कृतम्। परमात्मध्यानेन, तस्मिन् मनोयोगेन च विश्वरूपाज्ञानस्य निवृत्तिर्भवति। एतत्कारणेन एव श्रीमद्भगवद्गीतायामप्युक्तम्- 'ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम्।' अर्थात् अत्रापि समाधिस्वरूपं विवेच्यते यत् ज्ञानज्ञेयज्ञातारः एकत्रीभूत्वा तस्य हृदये एव तिष्ठन्ति। एतत् सर्वं वीक्ष्यैव पञ्चीकरणग्रन्थस्य टीकाकारैः स्वोपटीकासु मूलविषयं केन्द्रे स्थापयित्वा एव समाधेर्भेदौ विवेचितौ।

**सम्प्रज्ञातसमाधिः**-पञ्चीकरणविवरणाकारमते प्रणववाचकध्येयतत्त्वस्य विशिष्टतया ध्यानमयसाक्षात्कारकरणात् एव चित्तवृत्तयः ब्रह्मवृत्तिमयप्रवाहसंयुक्ताः भूत्वा एकस्यां यस्याम् अवस्थायां स्थिरीभूतानि भवन्ति, सा अवस्था सम्प्रज्ञातसमाधिरिति। सविकल्पसमाधौ ज्ञेयज्ञात्योः ज्ञानं पृथक्तया भवति। तयोः भेदयोः लयभावमनपेक्ष्य ध्येयवस्तुनः आकारधारकचित्तवृत्तेः अद्वितीयवस्तुनि (ब्रह्मणि) स्थिरीकरणमेव सविकल्पकसमाधिस्थितिः भवति। अस्मिन् समाधौ साधकस्य मनः ज्ञाता, ज्ञेयं च आत्मवस्तुरूपेण जायते। अनयोश्च ज्ञानप्रक्रियालयप्रवाहः पुनरपि सततं प्रवहति। एतस्यामवस्थायां साधकः ब्रह्मणः साक्षात्कारप्रक्रियायां स्थूलमार्गेण सूक्ष्ममार्गं प्रति गच्छति, एतां प्रक्रियामनुसरतः तस्य साधकस्य यत्किञ्चिद् ज्ञानबाधकद्वैतवस्तुप्रतीतौ सत्यपि यत्किञ्चिद् अद्वैततत्त्वः अपि प्रकाशते। ध्यानाभ्यासाधिक्येन अहङ्कारशून्यभावेन च ब्रह्माकाराकारितमनोवृत्तेः प्रवाहः सम्प्रज्ञातसमाधिः इति मुक्तिकोपनिषत्प्रामाण्यम्। यथाकश्चित्कागदेन पुष्पं निर्माय गृहशोभायै तस्य प्रयोगः क्रियते। किन्तु द्रष्टा जानाति यत् एतत् कागदं निर्मितं पुष्पम्, न तु यथार्थं पुष्पम्। किन्तु तस्य ज्ञाने तस्मिन् पुष्पत्वभानेऽपि पुष्पस्य मिथ्यात्वस्य एव निश्चयः बुध्यते। तथैव 'अहं ब्रह्मास्मि' बोधवाक्यबुद्धमयीब्रह्माकाराकारितचित्तवृत्तौ कागदनिर्मितपुष्पवद् ज्ञातृ-ज्ञान-ज्ञेयरूपित्रिपुट्याः भाने तत्र अद्वैतवस्तुनः अपि सत्यता प्रतिभासते। जीवब्रह्मणोः नित्यां शाश्वतीम् अभिन्नतां सम्प्रज्ञातुं योगमार्गः श्रुतिभिः निर्दिष्टः, सः सम्प्रज्ञातसमाधिमार्गः एव।

पञ्चीकरणचन्द्रिकायां टीकाकारः आचार्यगङ्गाधरः निदिध्यासनस्वरूपं स्पष्टयन् समाधिस्वरूपं विशदीकरोति। तत्रैव सम्प्रज्ञातसमाधिं द्विविधम् अपि कथयति- दृश्यानुविद्धं शब्दानुविद्धञ्च।

यस्याम् अवस्थायां साधकाः चित्तवृत्तिनिरोधाय सततं प्रयत्नं कुर्वन्ति। अभ्यासकाले चित्तमेकाग्रकरणार्थं चिन्तयन्ति, क्रोधलोभमोहामात्सर्यादिविकारसम्बन्धिताः सर्वाः वृत्तयः जडदृश्यरूपास्सन्ति, जीवात्मा चित्तवृत्तीनां साक्षिचेतनतत्त्वः इति। अर्थात् नाऽहं कता, नाऽहं भोक्तेत्यादिभावनाभिः तासां सर्वासां वृत्तीनां मिथ्यात्वं विज्ञाय साक्षिस्वरूपचौतन्यं यथार्थवस्तुरूपेण बुद्ध्वा जीवात्मा अहमेव द्रष्टा इत्येव अभ्यस्येत। एवम्प्रकारेण अभ्यासपरिपाकेन स्थिरस्य जीवात्मनः हृदये दृश्यपदार्थानां मिथ्यात्वनिश्चयात् स्वप्रकाशस्वरूपचिदात्मा प्रकाशते। एतत्परिणामेव अस्मिन् समाधौ नामरूपात्मकबाह्यजागतिकपदार्थानां विलीने सत्यपि चित्तवृत्तिनिग्रहणं न भवति, यतोहि मनसि नैके विचाराः विचरन्ति। अयमेव साक्षिभावनिष्ठः समाधिः दृश्यानुविद्धः सविकल्पकः समाधिः कथ्यते वेदान्तबुधैः।

साधकः यस्याम् अवस्थायामभ्यासाय 'नित्यब्रह्माभिन्नो पापरहितो ज्ञानस्वरूपो संसारबन्धनशून्योऽद्वयब्रह्मैवाहमस्मि' इति शास्त्रप्रतिपादितलक्षणाभावनया विवेकीभूत्वा चित्तवृत्तिनिग्रहणाय स्थिरीकरणाय च मनः आत्मनि संयोजयति। एतद्भावनापरिपक्वाभ्यासेन एव चित्तवृत्तीनाम् आत्मनि विलीने सति सहजमेव निर्विकल्पकसमाधिर्सिद्ध्यति। अतएव ध्येयतत्त्वमधिकृत्य स्वरूपं प्रति प्रकर्षज्ञानं प्राप्य चित्तं स्थिरीकृत्य च स्थिरीकरणस्य भावः शब्दानुविद्धः सविकल्पकसमाधिः बुध्यते। पञ्चीकरणवार्तिके सुरेश्वराचार्यैः अपि सूत्ररूपेणोपरोक्तप्रकारद्वयम्निरूपितम्-

**चिदात्माऽहं नित्यशुद्धबुद्धमुक्तसदद्वयः ।**
**परमानन्दसंदोहवासुदेवोऽअहमोमिति ।**
**ज्ञात्वा विवेचकं चित्तं तत्साक्षिणी विलापयेत् ॥**

योगसूत्रकारमते चित्तस्य एकाग्रभूमौ सम्प्रज्ञातसमाधिः सिद्ध्यति। त्रिगुणात्मकप्रकृतेः कार्यत्वात्चित्तं त्रिगुणात्मकम्। अत्र तामसिकराजसिकगुणवद्वृत्तीनाम् अभिभूते सति सत्त्वगुणवृत्तिप्राधान्यत्वम् उदेति। तस्मादेव अस्मिन् समाधौ अविद्यादिक्लेशानां प्रशमनेन क्रियमाणसञ्चितकर्मफलजन्यसंस्काराः अपि नश्यन्ति। बुद्धौ च स्थिताज्ञानं नष्ट्वा ध्येयतत्त्वस्यापि प्रकाशनञ्च इहैव भवति। अतश्चित्तस्य एकाग्रभूमौ सर्ववृत्तीनां निरोधो न भूत्वा सत्त्ववृत्तेरुदयो भवति यो हि ध्येयतत्त्वं प्रति प्रेरयति।

**असम्प्रज्ञातसमाधिः**-यद्यपि सविकल्पकसमाधौ ज्ञातृज्ञेयभेदः तिष्ठति यतोहि ज्ञातारं विना ज्ञेयसिद्धिः न सम्भवति। अपितु निर्विकल्पसमाधौ ज्ञातृज्ञानज्ञेयरूपत्रिपुटगतभेदः पूर्णतः लीनो भवति। अयं समाधिः ज्ञातुरखण्डाकाराकारितचित्तवृत्तेः ध्येयतत्त्वेन सह आत्यन्तिकाभेदं कुरुते। एतस्यामवस्थायां चित्तस्य ब्रह्मणि विलीने चित्तवृत्तेरपि ब्रह्मणि एव लीनो भवति। चित्तवृत्तयः शब्दस्पर्शरूपरसगन्धनिष्ठसंस्कारान् गृह्णन्ति। चित्तवृत्तीनां निरोधे एव ज्ञातुः पृथग्भावं न भासते यतोहि ज्ञातुरभावे चित्तवृत्तेरस्तित्वाभावोऽपि लक्ष्यते। ब्रह्मप्रकाशः एव सर्वत्र प्रकाशते। चित्तं स्वकारणभूतप्रकृतौ लीनो भूत्वा चौतन्यमयं भवति। यथा लवणमिश्रितसलिले तदाकाराकारितलवणस्यास्तित्त्वे सत्यपि जलमात्रमेव भासते, तथा ब्रह्माकाराकारित- चित्तवृत्तेरस्तित्त्वे सत्यपि चित्तवृत्तिप्रतीतिर्न भवति, ब्रह्ममात्रमेव भासते। अस्मिन् समाधौ चित्तस्य निरुद्धभूम्याः बीजरूपसंस्काराः सम्पूर्णतया प्रणश्यन्ति। एतदर्थं पञ्चीकरणटीकायां असम्प्रज्ञातसमाधिस्वरूपं प्रदर्शनाय श्लोकः प्राप्यते-

**मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः।**
**याऽसम्प्रज्ञातनामाऽसौ समाधिरभिधीयते।।**

**सुषुप्त्यवस्थासम्प्रज्ञातसमाधिगतभेदः**

असम्प्रज्ञातसमाधौ ब्रह्मैव प्रकाशते, ज्ञातृज्ञानज्ञेयगतभेदो न भासते। यदा अस्यामवस्थायां चित्तवृत्तयः (ज्ञातृ-ज्ञान-ज्ञेयगतविभागाः) सम्पूर्णतया निगृहीताः भवन्ति, तदा तस्यां स्थितौ सुषुप्त्यवस्थायां निर्विकल्पसमाधौ च अभेदभानं भवति। एतत्कारणेन उभयोर्मध्येऽभेदस्य आशङ्का जायते यतोहि उभयोः स्थित्योः चित्तवृत्तेर्ज्ञानं न तिष्ठति। सुषुप्त्यवस्थायां चित्तावस्थितिः कार्यकारणसम्बन्धेन स्वकारणभूताज्ञानरूपेण लीयते। तस्मात् सुषुप्तौ अज्ञानकारणेन चित्तवृत्तीनां बोधो न भवति। चित्तस्य स्वकार्यकारणसम्बन्धराहित्येन वस्तुमात्रत्वात् ब्रह्माकाराकारितसंस्कारत्वात् असम्प्रज्ञातसमाधिः साधनरूपेण स्वीक्रियते। अस्मिन् समाधौ चित्तवृत्तिनिरोधः जायते, तासां वृत्तीनां प्रतीतिर्न भवति किन्तु वृत्तिबोधस्थितिज्ञानं तु तिष्ठत्येव। विद्यारण्यस्वामिना एतत्तथ्यं परिपुष्टं यत् समाधिसमये तु ब्रह्माकाराकारितवृत्तीनां भानं न भवति परञ्च समाधेर्व्युत्थानकाले 'अहं तावत्कालपर्यन्तं समाधौ स्थितः' इति स्मृत्या वृत्तीनाम् अस्तित्त्वम् अनुमीयते। सम्प्रज्ञातासम्प्रज्ञातसमाध्योः अखण्डब्रह्मसाक्षात्काराय असम्प्रज्ञातसमाधिः सुनिश्चितः। यतोहि समाधेरन्यास्ववस्थासु चित्तवृत्तेः चाञ्चल्यस्वभावेन अन्योन्यप्रतीतीनामपि मेलनं भवति।

**असम्प्रज्ञातसमाधेर्विघ्नाः**-न केवलं योगदर्शने अपितु वेदान्तदर्शनेऽपि उल्लेखं प्राप्यते यदात्मानुसन्धानं तु असम्प्रज्ञातसमाधौ भवति किन्तु अस्य समाधेरभ्यासकालेऽनैका आन्तरिकविघ्नाः उत्पद्यन्ते। यदा समाधिकाले साधकः चित्तेन प्रमादवशात् मध्ये मध्ये विषयास्वादनेन ब्रह्मावलम्बनं कर्तुं न शक्यते। तदा तस्य मार्गेऽविद्यास्मितारागादिक्लेशाः आयान्ति। ते क्लेशा एव विघ्नाः ये साधकचित्तमस्थिरं कुर्वन्ति। एतदर्थं सुरेश्वराचार्यैरप्युक्तम्-

**चिदात्मनि विलीनं चेच्चित्तं नैवं चालयेत्।**
**पूर्णबोधात्मनाऽऽसीत् पूर्णाचलसमुद्रवत्॥**

अर्थाच्चित्तवृत्तीनां ब्रह्मलीने जाते सति कामादिविषयाणामास्वादनेन चित्तमस्थैर्यं न कुर्यात्। अस्यामवस्थायां जलधिसदृशं चित्तं शान्तं, स्थिरं च स्थाप्येत। यतोहि चित्तवृत्तीनां ब्रह्मविलीने सति मनसः सूक्ष्मवृत्त्या शब्दस्पर्शरूपरसगन्धसूक्ष्मविषयाणामास्वादनेन अनेके विघ्ना उत्पद्यन्ते। एते विघ्नाः हठात् चित्तस्य स्वभावं हरन्ति। शङ्कराचार्यैः समाधौऽभ्याससमये उत्पन्नविघ्नेषु अनुसन्धानराहित्यालस्यभोग-वासनातमलयविक्षेपकषायशून्यतेत्यादीनां प्रमुखतया नामानि प्रदत्तानि। वेदान्दसारे समाधिविघ्नाः चतुर्भागेषु विभक्ताः। तेषां नामानि लयविक्षेपकषायरसास्वादनानीति। एतेषु विघ्नेषु यदा चित्तं बाह्यर्थान् न गृह्णाति, न च ध्येयतत्त्वं प्रमादत्वात्गृह्णाति, तदा स लयनामकः विघ्नः बोध्यः। प्रमादरहितानासक्तचित्तं वस्तुतत्त्वग्रहणाय तत्परो भूत्वापि तत्त्वग्रहणेऽसमर्थं भवति विषयास्वादनात्, विक्षेपनामकविघ्नोऽसौ कथ्यते। लयविक्षेपाभ्यामुन्मुक्तसाधकचित्तस्य जन्मजन्मान्तरसंस्कारकारणैः ब्रह्मालक्ष्यीकृत्य भोगप्रवृत्तिः कषायविघ्नः। कषायावस्थामुक्तचित्तेन निर्विकल्पसमाधौ सविकल्पसमाधेः रसास्वादनमेव रसास्वादननामकविघ्नः। विघ्नान् इमान् दूरीकरणाय अभ्यासवैराग्योपायः चित्तं च स्थिरीकरणाय प्रोक्तः। निवातस्थदीपवत् सर्वविकारशून्यचित्तस्थितिः, ब्रह्माकारवृत्त्या पूर्णवृत्तिनिरोधज्ञानम् एव समाधिः। ब्रह्माकारवृत्त्या विषयाकाराकारितवृत्तीनां विनाशे सति अखण्डब्रह्मणः साक्षात्कारो भवति ततश्च ब्रह्मवृत्तीनामपि निरोधः इति। यथोक्तम् 'सर्ववृत्तिनिरोधे त्वसम्प्रज्ञातः समाधिः।'

**समाध्युपयोगिता फलञ्च**-शाङ्करवेदान्ते समाधिः ब्रह्मबोधाय सर्वोत्कृष्टतमं साधनं वर्तते इति श्रुत्यनुसारं 'सन्धिं समाधावात्मन्याचरेत्।' तत्त्वसाक्षात्काराय समाधिकाले श्रद्धाभक्तिजितेन्द्रियक्रोधजिता-दिगुणानाम् आवश्यकता भवति। समाधौ चित्तैकाग्रकरणाय वृत्तिनिरोधाय च बुद्धिस्थविकाराणां शोधनं प्रथमेव करणीयम्। यतोहि द्वैतप्रतीतेः कारणं बुद्धिकार्यं विद्यते। यथाऽग्निसंयोगेन लौहस्वर्णादिधातुना विविधरूपाणि धार्यन्ते तथा आत्मना संयुज्य बुद्धिरपि शब्दस्पर्शरूपरसगन्धविषय-सम्बन्धेन विविधेषु विषयेषु प्रकाशिता भवति अर्थात् सर्वत्र द्वैतमेव भासते। ध्येयतत्त्वं प्रति निश्चयात्मिका बुद्धिः आवश्यकी। अस्मिन् प्रसङ्गे नारायणाचार्यः तत्त्वाभिलाषिपक्षतः एकां शङ्कां प्रस्तुतवान्। यत् व्यवहारिकसत्तायां द्वैतं प्रतीयते। सर्वैः प्राणिनः लोकव्यवहारे द्वैतभावेन प्रेरितो भूत्वा आचरणं कुर्वन्ति तर्हि कथं लौकिकक्रियाकलापं परित्यज्य सर्वदा तत्त्वनिष्ठसमाधिः कर्तुं शक्यते? अस्य समाधानमपि सुरेश्वराचार्यकृतवार्तिकमाध्यमेन प्रस्तुतवान् असौ, यत् भोगपदार्थानां सम्पादनार्थं साधनभूतद्रव्यस्यसङ्ग्रहे दुःखं जायते, तेषां वस्तूनां संरक्षणेऽपि दुःखानि प्राप्यन्ते। भोग्यवस्तुलाभान्ते यदि तानि संरक्षितानि अपि कृतानि चेत् तेषां द्रव्याणां नष्टे सति नैकदुःखानि पुरतः आयान्ति। ब्रह्मलोकप्राप्त्यर्थं सकामभावनया निष्पादितकर्माण्यपि विपरीतफलप्राप्तौ सति मनसि दुःखानि एव भवन्ति। लोकपरलोकसिद्धये विहितकर्माण्यपि दुःखकारणान्येव।

सारं गच्छामश्चेत् प्राप्नुमो यत्योगसूत्राभिमतानि यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयो-ऽसम्प्रज्ञातसमाधेरङ्गानि अद्वैतवेदान्तेऽपि स्वीकृतानि। अद्वैतवेदान्ताचार्यैः योगदर्शनस्य साधनप्रक्रिया एकस्वरेण स्वीकृता। तत्त्वानुसन्धानाय वैराग्यभावं दृढीकरणाय च कर्मफलभावनां परित्यज्य नित्यनिरतिशयपुरुषार्थसिद्ध्यर्थं सर्वदा ध्येयतत्त्वं चिन्तयन् समाधिविधिः पञ्चीकरणग्रन्थेऽभीष्टः। आचार्यशङ्करवचसा अपि तदेव परिपुष्यति-

**अज्ञानहृदयग्रन्थेर्निःशेषविलयस्तदा।**
**समाधिनाविकल्पेन यदाद्वैतात्मदर्शनम्।।**

समाध्यन्ताङ्गानुष्ठानेन सञ्जातात्मसाक्षात्कारे सत्यज्ञानतत्कार्यं पूर्णतः परिसमाप्यते। प्रारब्धकर्मणां क्षयः, कर्मविपाकक्षये च सद्यः मोक्षभावः सिद्ध्यति। अत एव शङ्कराचार्यैः पञ्चीकरणग्रन्थे वर्णितं पञ्चीकरणप्रक्रिया लययोगस्य प्रतिपादिका अस्ति। पञ्चीकरणसिद्धान्तस्यानुशीलेन स्पष्टं ज्ञायते यत् मुमुक्षवः ब्रह्मबोधाय गुरूपदिष्टतत्त्वमसीत्यादिमहावाक्येषु ईश्वरत्वजीवत्वसर्वज्ञत्वाल्पज्ञत्वरूपवाच्यर्थान् परित्यज्य लक्ष्यार्थस्य चैतन्याशं गृह्णेयुः। मायोपहितब्रह्मणा पञ्चीकृतापंचीकृततत्त्वानामुत्पत्तिं ज्ञात्वा प्रलये च ब्रह्मणि एव क्रमेण भूतानां पूर्वे पूर्वे विलयं कृत्वा सर्वं खल्विदं ब्रह्मेति सिद्धान्तं परिपोषयन् ओङ्कारमात्रासु आत्मनः अवस्थां ब्रह्मणः च चतुष्पादेषु अभेदं ज्ञात्वा समाधौ आत्मसाक्षात्कारं कुर्यात्। यतोहि शाङ्करवेदान्ते

अंत:करणवृत्तीनां लयेन मोक्षं न भवति अपितु ब्रह्मभाव एव मोक्षः । इमे भावाः एव समाधिसन्दर्भे पञ्चीकरणग्रन्थमनुस्मरता टीकाकारेण शान्त्यानन्दसरस्वतिना अप्युल्लिखिता:-

'इति पञ्चीकरणं पञ्चानां भूतानामेकीकरणं ब्रह्मसाक्षात्कारोपयोगित्वेन यत्र ग्रन्थे प्रतिपादितं स ग्रन्थः पञ्चीकरणाख्यः पञ्चीकरणमितिपदेन गृहीतो भवति।'

## सन्दर्भग्रन्थसूचिः


1. सदानन्दयोगीन्द्रः. वेदान्तसारः (सुबोधिनीव्याख्योपेता) (व्याख्याकारः आद्याप्रसादमिश्रः). इलाहाबादः अक्षयवटप्रकाशनम्, 2011.
2. श्रीमदाद्यशङ्कराचार्यः. पञ्चीकरणम् (षट्टीकालङ्कृतम्) (सङ्कलनकर्ता गजाननसाधले). नवदेहली: चौखम्बा ओरियन्टालिया, प्रथमसंस्करणम्, 2008.
3. श्रीमदाद्यशङ्कराचार्यः. दृग्दृश्यविवेकः (अनुवादकः स्वामी निखिलानन्दः), मैसूर: श्रीरामकृष्णआश्रमः. 1931.
4. श्रीमदाद्यशङ्कराचार्यः. अपरोक्षानुभूतिः (अनुवादकः मुनिलालः). गोरखपुरः गीताप्रेसः, सम्वत् 2070.
5. श्रीमदाद्यशङ्कराचार्यः. विवेकचूडामणिः (अनुवादकः मुनिलालः). गोरखपुरः गीताप्रेसः, सम्वत् 2073.
6. महर्षिपतञ्जलिः. पातञ्जलयोगदर्शनम् (व्यासभाष्यसंवलितम्). व्याख्याकारः सुरेशचन्द्रश्रीवास्तवः. वाराणसी: चौखम्बासुरभारतीप्रकाशनम्, 2012.
7. श्रीविद्यारण्यमुनिः. पञ्चदशी (सम्पादकः करुणपतित्रिपाठीः). लखनऊः उत्तरप्रदेशलखनऊसंस्थानम्, 1997.
8. श्रीमद्भगवद्गीता (शाङ्करभाष्यसमेता). नवदेहली: मोतीलालबनारसीदासः. 2014.
9. माण्डूक्योपनिषद् (गौडपादकारिकाशाङ्करभाष्योपेता). गोरखपुरः गीताप्रेसः, सम्वत् 2069.
10. मुक्तिकोपनिषद्. (सम्पादकः जीवानन्दविद्यासागरः). कलकत्ता, 1972.
11. 108 उपनिषद् (ब्रह्मविद्याखण्डः) (सम्पादकः रामशर्माचार्यः). मथुराः युगनिर्माणयोजना, 2005.
12. उपाधिभेदात्स्वयमेवभिद्यतेचोपाध्यपोहेस्वयमेवकेवलः।
13. तस्मादुपाधेर्विलयाय विद्वान् वसेत्सदाकल्पसमाधिनिष्ठया।। विवेकचूडामणिः 358
14. श्रीमद्भगवद्गीतशाङ्करभाष्यम् 2.44
15. श्रीमद्भगवद्गीतशाङ्करभाष्यम् 2.53
16. योगसूत्रव्यासभाष्यम् 1.1
17. तदेवार्थमात्रनिर्भासंस्वरूपशून्यमिवसमाधिः। योगसूत्रः 3.3
18. पञ्चीकरणम्, पृ. 3-4
19. वेदान्तसारः (सुबोधिनीटीकया)
20. तस्याभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्तेविश्वमायानिवृत्तिः। श्वेताश्वतरोपनिषद् 1.10
21. श्रीमद्भगवद्गीता 13.17
22. प्रणवस्वरूपार्थानुसन्धानपुरःसरं एकरसवस्तुमात्रत्वेनचित्तस्य तदाकारवृत्त्यवस्थानंसम्प्रज्ञातसमाधिरित्युच्यते ।पञ्चीकरणम् (विवरणव्याख्यया), पृष्ठसङ्ख्या 168
23. ब्रह्माकारमनोवृत्तिर्प्रवाहोऽहंकृतिंविना ।सम्प्रज्ञातसमाधिः स्यात् ध्यानाभ्यासप्रकर्षतः ।मुक्तिकोपनिषद् 2.53
24. अथजीवब्रह्मणोर्मिथोव्यतिहारेणैकरसस्वरूपवाक्यार्थप्रतिपत्त्यर्थं-साधनभूतंसमाधिं सङ्गिरते। पञ्चीकरणम् (विवरणव्याख्यया), पृष्ठसङ्ख्या 168
25. यदैकान्ते यमनियमादिबहिरङ्गसम्पन्नो विवेकीसेन्द्रियस्य चित्तस्याखण्डैकरसे लक्ष्ये धारणां कृत्वा ध्यानारम्भंकरोति ।तदान्तिमंतदेव घटिकादिदीर्घकालंप्रयत्नपूर्वकं कृतं सदृश्यानुविद्धं तदेवपरिपक्वंसत्समाधिश्चभवतीतिज्ञेयम् ।पञ्चीकरणम् (तत्त्वचन्द्रिकया), पृष्ठसङ्ख्या 217
26. एवंपुनः पुनरभ्यस्यमानाब्रह्मविद्याख्याऽखण्डकाराचित्तवृत्तिः सत्त्वोत्कर्षतारतम्यवशादचलासूक्ष्मा शुद्धा च सतीप्रमाणप्रमेयगता-सम्भावनाविपरीतभावनादिब्रह्मसाक्षात्कारप्रतिबन्धकानिनिराकृत्य दग्धेन्धनाग्निवत्स्वयमपिसमूलप्रपञ्चमुच्छिद्य चिन्मात्रा सतीनष्टाभवति। पञ्चीकरणम् (तत्त्वचन्द्रिकया), पृष्ठसङ्ख्या 217
27. कामाद्याश्चित्तगा दृश्याः तत्साक्षित्वेनचेतनम्। ध्यायेद् दृश्यानुविद्धोऽयं समाधिः सविकल्पकः।। दृग्दृश्यविवेकः 24
28. असङ्गः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः ।अस्मीति शब्दविद्धोऽयं समाधिः सविकल्पकः ॥ दृग्दृश्यविवेकः 25
29. पञ्चीकरणम् (वार्तिके) 50-51
30. यस्त्वेकाग्रेचेतसिसद्भूतमर्थंप्रद्योतयति, क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखं करोति, स
31. सम्प्रज्ञातो योगइत्याख्यायते ।स च वितर्कानुगतो, विचारानुगत, आनन्दानुगतोऽस्मितानुगतइत्युपरिष्टात्
32. प्रवेदयिष्यामः ।योगसूत्रव्यासभाष्यम् 1.1
33. निर्विकल्पकस्तुज्ञातृज्ञानादिविकल्पलयापेक्षयाद्वितीयवस्तुनितदाकाराकारिताया श्चित्तवृत्तेरतितरामेकीभावेनावस्थानम् ।वेदान्तसारः (समाधिनिरूपणम्)
34. वृत्तिमपितन्मात्रत्वेनोपसंहृत्यवृत्तिमतश्चित्तस्य प्रयत्नपूर्वकंवस्तु-मात्रत्वेनावस्थानमसम्प्रज्ञातसमाधिः ।पञ्चीकरणम् (विवरणव्याख्यया), पृष्ठसङ्ख्या 169
35. पञ्चीकरणम्, पृष्ठसङ्ख्या 169
26. लीयतेहिसुषुप्तेतन्निगृहीतं न लीयते। तदेवनिर्भयंब्रह्मज्ञानालोकंसमन्ततः ॥ माण्डूक्यकारिका 3.35
27. वृत्त्यस्तुतदानीमज्ञाताअप्यात्मगोचराः। स्मरणादनुमीयन्तेव्युत्थितस्य समुत्थिताता॥ पञ्चदशी 1.53
28. पञ्चीकरणम्(वार्तिके) 52
29. समाधौक्रियमाणेतुविघ्नाआयान्तिवैबलात। अनुसन्धानराहित्यमालस्यं-भोगलालसम्।
30. लयस्तमश्चविक्षेपोरसास्वादश्च शून्यता। एवं यद्विघ्नबाहुल्यंत्याज्यंब्रह्मविदा शनैः ॥ अपरोक्षानुभूतिः 127-128
31. निर्विकारतयावृत्त्याब्रह्माकारतयापुनः। वृत्तिविस्मरणंसम्यक् समाधिर्ज्ञानसञ्ज्ञकः ॥ अपरोक्षानुभूतिः 124
32. योगसूत्रव्यासभाष्यम् 1.1
33. आरूण्योपनिषद् 2
34. आदिमध्यावसानेषु दुःखंसर्वमिदं यतः ।तस्मात्सर्वंपरित्यज्य तत्त्वनिष्ठोभवेत्सदा ।।पञ्चीकरणम् (वार्तिके) 54
35. विवेकचूडामणिः 354
36. कृतकृत्योभवेद्विद्वाञ्जीवन्मुक्तोभवेत्सदा ।आत्मन्यारूढभावस्तुजगदेतन्न वीक्षते ।।पञ्चीकरणम् (वार्तिके) 56
37. पञ्चीकरणम् (अद्वैतागमहृदयटीकया), पृष्ठसङ्ख्या 183


***( शोधच्छात्रा )***

***संस्कृतप्राच्यविद्याध्ययनसंस्थानम्***

***जवाहरलालनेहरूविश्वविद्यालयः, नवदेहली***

ISSN 2456-3420

# व्युत्पत्तिवादानुसारेण लृडर्थविमर्शः

डॉ. सन्तु-सिंहः

भट्टाचार्यैर्गदाधरैः प्रकृत्यर्थनिर्णायकः शक्तिवादः प्रत्ययार्थ-प्रतिपादकः व्युत्पत्तिवादश्च विरचितः। तत्र व्युत्पत्तिवादे सुपामर्थान् निरूप्य तिङामर्थास्तैः सविशदं व्याख्याताः। आचार्यैर्लडर्थं प्रतिपाद्य लृडर्थो न्यरूपि। ननु टकारानुबन्धानुसारं डकारानुबन्धानुसारं च लट्, लिट्, लुट्, लृट्, लोट्,लङ् विधिलिङ् आशीर्लिङ् लुङ् लृङ् इति क्रममुज्झित्वा भट्टाचार्याणां लट्, लृट्, लुट्, लुङ् लङ् लिङ् लोट् इति क्रमाश्रयणम् अयुक्तम् इति चेदुच्यते यत्केवलातीतत्वस्य लुडर्थस्य निरूपणानन्तरम् अनद्यतनत्वसहितस्य लडर्थस्य निरूपणे, ततश्च परोक्षत्वसहितस्य तस्य लिडर्थस्य निरूपणे लाघवम्। तथा च लृडर्थस्य केवलानुगतत्वस्य निरूपणात्परम् अनद्यतनत्वसहितस्य लुडर्थस्य निरूपणे एव लाघवमिति विचार्य भट्टाचार्यैः लट्, लृट्, लुट् इत्यादिक्रम आश्रितः। अत्र प्रकृते प्रबन्धे भट्टाचार्याणां मतानुसारं लृडर्थं निरूप्य कस्तत्र विशेष इति सविशदं समीक्षितम्।

गदाधरनये लृट्प्रत्ययस्यार्थो हि भविष्यत्त्वम्। तथाहि भगवता पाणिनिना लृट् शेषे च इति लृड्विधायकं सूत्रं सूत्रितम्। भविष्यति गम्यादयः इत्यतो भविष्यतीति अनुवर्तमाने लृड्विधायकसूत्रेण भविष्यदर्थे हि लृड् विधीयते। तच्च भविष्यत्त्वं नाम अनागतत्वम्। ननु कस्तावद् भविष्यदर्थ इति जिज्ञासायामुक्तं गदाधरैः -

वर्तमानप्रागभावप्रतियोगित्वं प्रतियोगितासम्बन्धेनान्वयी वर्तमानप्रागभावो वा लृट्प्रत्ययार्थः।[द्व] इति।

वर्तमानो यः प्रागभावः तत्प्रतियोगित्वम् अनागतत्वं भविष्यत्त्वं वा। यथा घटो भविष्यतीत्यत्र यो घटोत्पत्तिप्रागभावो वर्तमानः तत्प्रतियोगित्वं घटोत्पत्तावस्ति। अथवा प्रतियोगितासम्बन्धेनान्वयि-वर्तमानप्रागभावत्वं भविष्यत्त्वम्। अत्र वर्तमानत्वं नाम शब्दप्रयोगाधि-करणक्षणरूपम्। तथा च प्रागभावे वर्तमानत्वं च शब्द्रयोगाधिकरणक्षण-वृत्तित्वम्। तेन पक्ष्यति इत्यत्र शब्दप्रयोगाधिकरणक्षणरूपवर्तमानका-लवृत्ति पाकानुकूलकृत्यभावीयप्रतियोगित्वं पाकानुकूलकृतावस्तीति प्रतियोगितासम्बन्धेन तादृशवर्तमानकालीनप्रागभावः पाकानुकूलकृतौ वर्तत इति लक्षणसमन्वयः।

उपर्युक्तयोः भविष्यदर्थपरिष्कारयोः प्रागभावघटितत्वात् प्रागभावानङ्गीकृतां मते अप्रसद्धिमाशङ्क्य तदघटिततया भविष्यत्स्वरूपं प्रपञ्चितम् -

प्रागभावानङ्गीकारे वर्तमानकालध्वंस एव तदर्थः[द्वद्व] इति।

वस्तुतस्तु दीधितिकृता सामान्यलक्षणप्रकरणे प्रागभावः खण्डितः। तथा चोक्तम् -

अथैवं जातो घट इत्यादिवदुत्पन्नो घटध्वंस इत्यादिविलक्षण-प्रत्ययबलेन नाशोऽतिरिच्यतां न तु प्रागभावः[द्वद्वद्व] इति।

जातो घट इति प्रत्यक्षबलात् यथा घटः सिद्ध्यति तथैव उत्पन्नः घटध्वंसः इति प्रत्यक्षबलात् ध्वंसः सिद्ध्यति। परन्तु इह इदानीं घटप्रागभावः इति प्रत्यक्षाभावात् प्रागभावः प्रत्यक्षप्रमाणेन नैव सिद्ध्यति। तथाहि दिनकर्यां दीधितिकृन्नय एवम् उपस्थापितः-

केचित्तु जातो घट इत्यादिवत् उत्पन्नो घटध्वंसः इति प्रत्यक्षबलेन नाशः अतिरिच्यते, न तु प्रागभावः। इह इदानीं घटप्रागभाव इति लोकानां प्रत्ययाभावात्।[द्व1] इति।

अतः दीधितिकृद्भिः वर्तमानप्रागभावप्रतियोगित्वस्य भविष्यत्वं नाङ्गीकृतम्। तथाहि सामान्यलक्षणाप्रकरणे दीधितौ उक्तम् -भविष्यत्त्वं हि न वर्तमानप्रागभावप्रतियोगित्वम्1 इति। अतो गदाधरेण प्रागभावानङ्गीकर्तृणां दीधितिपादानां मतानुसारं भविष्यत्स्वरूपं प्रतिपादितम्।

ननु पच्यमाने चैत्रे भाविकालावच्छिन्नप्रकृतपाकक्रियानुकूलां कृतिमादाय पक्ष्यतीति प्रयोगापत्तिः। तुषविमोकरूपप्रथमक्रियाप्रभृति समाप्तिक्रियापर्यन्तकाले पचतीति व्यवहारः। पाकश्च तुषविमोकचुल्ली-प्रज्वालनस्थाल्यधिरोहणाद्यनेकक्रियाकलापः। तत्र स्थाल्यधिरोहणा-नुकूलकृति-वर्तमानदशायां मण्डस्रावणाद्यनुकूलभाविकृतेः प्रागभावस्य सत्त्वात् पक्ष्यतीति प्रयोगः सम्भवति। न च धात्वर्थपाकानुकूल-कृतित्वावच्छेदेन भविष्यत्त्वमन्वेतीति पाकारम्भदशायां पाकमध्यकाले पाककृतिसामान्यान्तर्गतायां मध्यकालीनकृतौ वा अनागतत्वबाधेन पक्ष्यतीति प्रयोगावरणं सम्भवतीति वाच्यम्। तथा सति पूर्वपूर्वपाकानुकूलकृतौ पाकानुकूलकृतित्वाक्रान्तायां भविष्यत्त्वबाधात् पक्ष्यमाणे अपि चैत्रे अयं पक्ष्यतीति प्रयोगानुपपत्तिः, पाकानुकूल-कृतित्वावच्छेदेनानागतत्वस्य बाधात्। न च तत्तत्पाकानुकूकृतित्वावच्छेदेन भविष्यत्त्वान्वयान्नानुपपत्तिरिति वाच्यं तत्तत्पाकत्वेन पाकस्य पदादनुपस्थितेः। पदादनुपस्थितस्य शाब्दबोधे च न भानम्। नापि यत्किञ्चित्पाकानुकूलप्रथमकृतित्वावच्छेदेन अनागतत्वान्वयः, प्रथमत्वोपस्थापकपदाभावात् तत्तद्व्यक्तित्वमनन्तर्भाव्य यत्किञ्चित्त्वस्य दुर्वचत्वाच्चेति पाकारम्भदशायां पाकमध्यदशायां वा पचमाने पक्ष्यतीति प्रयोगापत्तिर्ध्रुवा भवतीति पूर्वपक्षिणामाक्षेपः।

अत्र भट्टाचार्यैः समाधिर्गदितो यत् वर्तमानप्रागभावप्रतियोगित्वं, प्रतियोगितासम्बन्धेन अन्वयी वर्तमानप्रागभावः, वर्तमानकालध्वंसो वा लृडर्थ इत्यत्र वर्तमानत्वं नाम वर्तमानकालवृत्तित्वम्। वर्तमानकालवृत्तित्वं नाम शब्दप्रयोगाधिकरणकालवृत्तित्वम्। अत्र च क्षणरूपः कालो बोध्यः। तेन शब्दप्रयोगाधिकरणक्षणवृत्तिप्रागभावप्रतियोगित्वम् भविष्यत्त्वम् इति पर्यवसितम्। तथा च शब्दप्रयोगाधिकरणक्षणवृत्तिरूपवर्तमानप्रागभावस्य लृट्-प्रत्ययार्थत्वे स्वीकृते तस्य स्वविशिष्टकालवृत्तिकृतिजन्यपाका-

ननुकूलत्वविशिष्टप्रतियोगितासम्बन्धेनान्वयः बोध्य इति गदाधरसिद्धान्तः। तेन न पाकारम्भदशायां पाकमध्यदशायां वा पचमाने पक्ष्यतीति प्रयोगापत्तिः। तथाहि स्वं वर्तमानप्रागभावः, स्वविशिष्टकालः वर्तमानप्रागभावविशिष्टकालो वर्तमानकालः, तद्वृत्तिकृतिजन्यपाकानुकूला भविष्यत्कालीना कृतिस्तथा वर्तमानप्रागभावप्रतियोगिनी। एवं स्वविशिष्टकालवृत्तिकृतिजन्यपाकाननुकूलत्वविशिष्टप्रतियोगितासम्बन्धेन भविष्यत्-कालिककृतौ वर्तमानप्रागभावस्यान्वयो बोध्यः।

तथा च पचमानकर्तृकपाकानुकूलोदीच्यकृतौ वर्तमानप्रागभावप्रतियोगितायाः सत्त्वेऽप्युक्तविशिष्टकालवृत्तिकृतिजन्यपाकाननुकूलत्वं नास्ति, तादृशपाकानुकूलत्वस्यैव सत्त्वादिति नोक्तोदीच्यकृतावुक्तसम्बन्धेन वर्तमानप्रागभावस्यान्वयः सम्भवतीति न पचमाने उक्ता पक्ष्यतीति प्रयोगापत्तिः। भविष्यत्पाककृतौ तु पचमानकर्तृकपाकाननुकूलत्वं वर्तमानप्रागभावप्रतियोगित्वं चास्ति। अत उक्तसम्बन्धेन वर्तमानप्रागभावस्य भविष्यत्पाककृतावन्वयः सम्भवति। अतो न पक्ष्यमाणे पक्ष्यतीति प्रयोगानुपपत्तिः।

वर्तमानकालध्वंसस्य शब्दप्रयोगाधिकरणक्षणरूपवर्तमानकालवृत्तिध्वंसस्य लृडर्थत्वे स्वपूर्वकालीनकृतिजन्यपाकाननुकूलत्वविशिष्टाधेयतासम्बन्धेन तस्य कृतावन्वयो बोध्य इति गादाधरसिद्धान्तः। अत्र स्वं वर्तमानकालध्वंसः, वर्तमानकालध्वंसपूर्वकालीनकृतिः वर्तमानकालीना कृतिः, तज्जन्यपाकाननुकूला भविष्यत्कालीना कृतिः तथा कालोपाधिवर्तमानकालध्वंसवृत्तिः। उक्तसम्बन्धेन भविष्यत्पाककृतौ वर्तमानकालध्वंसान्वयसम्भवान्न पक्ष्यमाणे पक्ष्यतीति प्रयोगानुपपत्तिः। पचमानकर्तृकपाकानुकूलोदीच्यकृतौ तु पचमानकर्तृकपाकाननुकूलत्वस्य सम्बन्धघटकस्यासत्त्वान्न तादृशकृतौ वर्तमानकालध्वंसरूपस्य भविष्यत्कालस्यान्वयः सम्भवति। तेन न पचमानेऽपि न पक्ष्यतीति प्रयोगापत्तिः स्यात्। तथाहि गादाधरी गीरियम्-

अथ पचमानेऽप्युदीच्यपाकानुकूलकृतिमादाय पक्ष्यतीत्यादिप्रयोगापत्तिः। पाकानुकूलकृतित्वावच्छेदेन चानागतत्वस्वीकारो न सम्भवति पूर्वपूर्वपाकानुकूलकृतौ तद्बाधात् पक्ष्यमाणेऽपि पक्ष्यति इति प्रयोगानुपपत्तेः।

तत्तत्पाकानुकूलकृतित्वावच्छेदेनापि तदन्वयासम्भवः तत्तत्पाकत्वेन पदादनुपस्थितेः।

नापि यत्किञ्चित्पाकानुकूलाद्यकृतित्वावच्छेदेन तदन्वय आद्यत्वोपस्थापकपदाभावात्, तत्तद्व्यक्तिमनन्तर्भाव्य दुर्वचत्वाच्चेति चेन्न, प्रागभावस्य वर्तमानत्वं शब्दप्रयोगाधिकरणक्षणवृत्तित्वम्, वर्तमानप्रागभावस्य प्रत्ययार्थत्वे तस्य स्वविशिष्टकालवृत्तिकृतिजन्यपाकाननुकूलत्वविशिष्ट-प्रतियोगितासम्बन्धेन, वर्तमानकालध्वंसस्य तदर्थत्वे च स्वपूर्वकालीनकृतिजन्यपाकाननुकूलत्वविशिष्टाधेयतासम्बन्धेन कृत्यंशेऽन्वयोपगम उदीच्यकृतौ वर्तमानप्रागभावभावादेर्दर्शितविशिष्टसम्बन्धासत्त्वेनातिप्रसङ्गविरहात्।[1द्ध]इति।

निगमनम् -एवं सर्वैरेव भविष्यत्सामान्यं लृडर्थत्वेन स्वीकृतम्। परं तदर्थघटकीभूतभविष्यन्निरूपणावसरे वर्तमानप्रागभावप्रतियोगिसमयोत्पत्तिकत्वं भविष्यत्त्वम् इत्येवं शाब्दिकैः प्रागभावघटकं भविष्यल्लक्षणमकारि। भट्टाचार्यैर्यथा वैयाकरणमतं स्वीकृतं तथा प्रागभावानङ्गीकर्तृणां नयानुसारमपि भविष्यल्लक्षणं निरूपितम्। तथाहि वर्तमानप्रागभावो वा लृट्प्रत्ययार्थः। प्रागभावानङ्गीकारे वर्तमानकालध्वंस एव तदर्थः। इति। तत्र वर्तमानकालध्वंसे चाधेयतासम्बन्धेन कृतेरन्वयो बोध्यः। तत्र ध्वंसस्य जन्यत्वेन जन्यमात्रं कालोपाधिरिति नियमात् कालोपाधित्वम्। कालोपाधौ कालिकसम्बन्धेन समकालीनपदार्थानां वृत्तित्वनियमादनागतकृतिरपि वर्तमानकालध्वंसात्मककालोपाधौ तिष्ठेदित्याधेयतासम्बन्धेनान्वयस्तस्याः। एवं भट्टाचार्यमतमत्र वैयाकरणमतपरिपूरकतया वर्तत इत्यत्र गदाधरो विशिष्यते। विना गदाधरमतं लृडर्थविषयकं नूनं न्यूनतादोषपत्तिरिति तद्दूरीकरणार्थं गदाधरमतं सर्वैरङ्गीकार्यम् इति गदाधरमतं विजयतेतमाम् इति दिक्।

## सहायकग्रन्थाः


1. कारिकावली प्रभा-मञ्जूषा-दिनकरी-रामरुद्री-गङ्गारामीव्याख्यासहिता, श्रीशङ्कररामशास्त्रि-सम्पादिता, चौखम्बासंस्कृतप्रतिष्ठानम्, नवदेहली, पुनर्मुद्रितसंस्करणम्, 2010.
2. व्युत्पत्तिवादः (सुनन्दाव्याख्यासहितः), ड.सच्चिदानन्दमिश्रसम्पादितः, भारतीयविद्याप्रकाशनम्, दिल्ली, 2001.
3. व्युत्पत्तिवादः (सादर्शः), हरेरामत्रिपाठि-सम्पादितः, राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली, 2011.
4. व्युत्पत्तिवादः(गूढार्थतत्त्वालोकः), धर्मदत्तझासम्पादितः, चौखम्बा कृष्णदास अकादमी, वनारस, 1978.
5. व्युत्पत्तिवादः (कृष्णम्भट्टी-दीपिका-प्रकाश-शास्त्रार्थकलादिव्याख्यायुतः), अचिन्त्यदास-सम्पादितः, न्यू भारतीय वुक् कोर्परेशन्, दिल्ली, 2004.
6. सामान्यलक्षणाप्रकरणम्, केशवद्विवेदि-सम्पादितम्, श्रीदक्षिणामूर्तिमठः, वाराणसी, 2009विक्रमाब्दः।


## तथ्यसूत्राणि

1. सादर्शे व्युत्पत्तिवादे 293-पृष्ठाङ्के
2. तत्र, 294-पृष्ठाङ्के
3. सामान्यलक्षणप्रकरणे 219-22पृष्ठाङ्के
4. कारिकावल्यां 154-156पृष्ठाङ्के
5. सामान्यलक्षणाप्रकरणे 203-पृष्ठाङ्के
6. सादर्शे व्युत्पत्तिवादे 294-296पृष्ठाङ्के


*सहायकाध्यापकः*

*संस्कृतविभागस्य, बाँकुड़ाविश्वविद्यालयस्य*

ISSN 2456-3420

# ऋग्वेदीयस्य प्रथमाग्निसूक्तस्य समीक्षणम्

झिलिविश्वासः

**आमुखम् –**

वैदिकदेवतासु अन्यतमं स्थानं बिभर्ति अग्निः। ऋक्संहितायां प्रायः 200 सूक्तेषु अग्निः स्तूयते। कदाचित् पुनः अन्यैः देवैः सह अग्निदेवः स्तूयते। निरुक्तकारः यास्काचार्यः अग्निना सह स्तुतानां देवतानां नामोल्लेखम् अकरोत्, ते तावत् – इन्द्रः, सोमः, वरुणः, पर्जन्यः ऋतुसमूहश्च। यास्काचार्यः प्राह यद् विष्णुना पूषदेवतया च सह अग्निमुद्दिश्य हविःप्रदानविधिः ब्राह्मणेषु यद्यपि उपलभ्यते तथापि दशमण्डलात्मके ऋग्वेदे तेषां युगपत् स्तुतिमन्त्राः नैव उपलभ्यन्ते। सूक्तपरिसंख्यानदृष्ट्या इन्द्रात् परम् ऋग्वेदे पूज्यः देवः अग्निः चेदपि अग्नेः गुरुत्वं सर्वापेक्षया अधिकम्।

वैदिकजीवने धर्मचर्यायां च अग्नेः एकं स्वतन्त्रं स्थानं विद्यते। दैनन्दिनगार्हस्थ्यकर्मसम्पादनाय वैदिकधर्मावलम्बिनो मनुष्याः गृह्याग्निं प्रज्वालयन्ति। अत एवाग्निः गृहपतिः इत्युच्यते। पुनः श्रौतकर्मसम्पादनाय प्रत्येकं दिवसे ते आहवनीयप्रभृतीनाम् अग्नीनाम् आधानं स्थापनं च अग्निशालायां कुर्वन्ति स्म। अग्निहोत्रादिश्रौतकर्म-सम्पादनाय श्रौताग्निः प्रज्वाल्यते स्म। अत एव अग्निः चिरनवीनः युवा इत्युच्यते। तथाह्याम्नातं 'निषसाद दमे दमे कविर्गृहपतिर्युवा'[1] इति। अग्निः हि यज्ञानां रक्षकः दीप्तिमान् देवः।

वेदे कुत्रचित् शरीरधारी पुरुष इव अग्निः वर्णितः। तस्य आननं पृष्ठदेशश्च घृतवर्णीयः, केशराशिः स्फुलिङ्गवर्णः, श्मश्रू पिङ्गलम्, दन्तपङ्क्तिः सुवर्णभास्वरा चिबुकं च उन्नतम्। घृतेन सह तस्य दृढः सम्बन्धः। घृतम् अग्निस्पर्शेण अग्निः भवति। अनिर्वाणस्य नये घृतं हि ज्योतिर्मयम्। घृतप्रतीकः, घृतपृष्ठः, घृतनिर्निक, घृतकेशः इत्यादीनि नामानि तस्य ज्योतिर्मयरूपस्य व्यञ्जकानि इति अनिर्वाणस्य[2] मतम्।

स्थानानुसारेण यास्काचार्येण देवानां वर्गत्रयं विहितम् – पृथिवीस्थानीयः, अन्तरिक्षस्थानीयः, द्युलोकस्थानीयश्च। तत्र अग्निः पृथिवीस्थानीयः। तस्य वैशिष्ट्यं कर्म च यास्केन प्रोक्तम् – 'अथास्य कर्म वहनं च हविषामावाहनं च देवानाम्, यच्च किञ्चिद्दार्ष्टिविषयकम् अग्निकर्मैव तत्।'[3] इति। दर्शनानुकूलकर्मसाधनं यद्यपि अग्निकर्म तथापि हविर्वहनं देवानां च यज्ञं प्रति आवाहनमेव तदीयं प्रधानं कर्म। अतः मन्त्रैः देवताभिः सह यज्ञं प्रति तदीयम् आगमनं प्रार्थ्यते।[4] किञ्चोच्यते द्युतिमयः अग्निः यथा देवान् प्रति गच्छतीति।[5] अग्निः देवान् यज्ञस्थलम् आह्वयति अतः स होता। स यजमानप्रदत्तं हविः देवान् प्रति वहति अतः स वह्निः, वोढा, हव्यवाट् इत्युच्यते।

निरुक्तकाराः यज्ञीयदृष्ट्या पार्थिवदृष्ट्या च अग्निशब्दस्य निर्वचनं विहितवन्तः। निघण्टौ आदौ अग्निः, जातवेदाः, वैश्वानरः इति तिस्रः अग्निवाचकदेवता उल्लिखिताः। यास्काचार्येण अग्निशब्दस्य त्रिधा निर्वचनं विहितम्।[6] तत्र प्रथमं निर्वचनं तावत् 'अग्रणीर्भवति' इति। देवतानाम् अग्रणीः अर्थाद् देवेषु तस्य प्राधान्यमधिकम्। स ह देवानां सेनानीः भवति। द्वितीयं निर्वचनं तावद् 'अग्रं यज्ञेषु प्रणीयते' इति। यज्ञकर्मणि अग्निप्रणयनम् आदौ भवति। ततः तृतीयं निर्वचनं भवति 'अङ्गं नयति सन्नममानः' इति। अग्निः यम् आश्रयति तम् स्वमङ्गं सम्पादयति अर्थाद् दहति।

अपरः निरुक्तकारः स्थौलाष्ठीविः कथयति यद् अक्नोपनो भवति इत्यग्निः। अर्थाद् 'न क्नोपयति, न स्नेहयति' इति। अग्निः न कञ्चित् स्नेहयति। इत्थम् अग्निशब्दस्य निर्वचनानि प्राप्यन्ते।

साधारणदृष्ट्या अग्नेः पिता द्यौः माता च पृथिवी। बहवः ऋक्संहितायां मन्त्राः एतत् मतं विवृणोति।[7] अग्नेः जन्मपरिचयः न सरलीकृतः इति भावना हिलेब्राण्डट्महोदयं विविधजन्मतत्त्वानुसन्धानाय प्रेरयति। अतः स कथयति – 'Comprehending the nature of the Vedic fire god, it appears to be very simple but a close study shows that it is one of the most difficult problems of the Vedic mythology.'[8]इति।

वेदे वर्णितः अग्निदेवः कदाचिद् द्युलोके सूर्यः, कदाचिद् अन्तरिक्षे विद्युत्, सागरे वाडवानलः, गृहोपान्ते यागाग्निश्च। अग्निः न केवलं द्यावापृथिवीजः अपि तु अब्जः अपि। त्वष्टा वा तस्य जनकः। अथर्ववेदे[9] समाम्नातो यद् अग्निः जलजः इति। ऋग्वेदस्य प्रसिद्धे पुरुषसूक्ते विराट्पुरुषस्य मुखाद् इन्द्रः चन्द्रः अग्निश्च उत्पद्यते इति वर्णितम्।[10] कदाचिद् बलस्य पुत्रः कदाचिच्च इलापुत्रः कदाचिद्वा अरणिमन्थनोत्थः स वर्णितः। ऋक्संहितायां पुनः तस्य उत्सत्रयं समाम्नातम् – 'दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः तृतीयमप्सु' (ऋ. सं. 10। 45। 1) इति। अग्नेः त्रिकत्वम् एकम् असामान्यवैशिष्ट्यम्, यद्धि अन्येषां देवानां नास्ति। अर्थात् पृथिवीस्थानीयः अपि अयं त्रिषु लोकेषु एव विद्यमानः। अतः तैत्तिरीयसंहितायाम् आम्नातम् – 'अग्निः सर्वा देवताः' इति। अनिर्वाणमहोदयेन प्रोक्तं यद् 'इष्टसाधनायाः परमव्योमप्राप्तिरेव साध्यावधिः। तत्र देवता अग्निदेवः। अन्ये देवाः तस्य विभूतयः'[11] इति। ऋग्वेदे यद्यपि बहूनां देवानां स्तुतिः विद्यते, परन्तु तेषु बहुषु एकः प्राप्यते सोऽद्वितीयः एवाग्निः[12]।

**अग्निसूक्तपर्यालोचनम् –**

ऋग्वेदे प्रथममण्डलस्य प्रथमं सूक्तम् अग्निसूक्तम्। अस्य सूक्तस्य देवता अग्निः, ऋषिः वैश्वामित्रो मधुच्छन्दाः, गायत्री च छन्दः। अग्निसूक्ते सायणादिभाष्येषु वङ्गानुवादेषु च ये भेदाः सम्प्राप्यन्ते तेषां तुलनात्मकं पर्यालोचनम् अत्र विधीयते।

**अत्र प्रथमो मन्त्रस्तावद् –**

**'अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्।**
**होतारं रत्नधातमम्।'** इति।

मन्त्रस्यास्य सायणानुसारेण अन्वयस्तावत् – 'अग्निनामकं देवम् ईडे स्तौमि। ईड स्तुतौ इति धातुः। कीदृशमग्निम्? यज्ञस्य पुरोहितम्।

पुनः कीदृशम्? देवं दानादिगुणयुक्तम्। पुनः कीदृशम्? होतारम् ऋत्विजम्। देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव। पुनरपि कीदृशम्? रत्नधातमं यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा।' इति।

अत्र पुरोहितशब्दस्य अर्थमाह सायणाचार्यः – 'यथा राज्ञः पुरोहितस्तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्य अपेक्षितं होमं सम्पादयति। यद्वा यज्ञस्य सम्बन्धिनि पूर्वभाग आहवनीयरूपेणावस्थितम्।'[13] इति। एवं सायणाचार्यस्य मते पुरोहितशब्दस्य द्विविधः अर्थः – 1) राज्ञः पुरोहितवद् अभीष्टसम्पादकः, तत्स्थानीयः।2) यज्ञस्य पूर्वस्यां दिशि आहवनीयरूपेण अवस्थितः च। मुद्गलभाष्ये पुरोहितशब्दविषये प्रोक्तम् – 'यज्ञस्य पुरोहितं यज्ञस्य पूर्वभागे आहवनीयरूपेण स्थितम्।'[14] इति। अर्थात् पुरोहितः यज्ञस्य पूर्वस्यां दिशि आहवनीयरूपेण स्थितः। स्कन्दस्वामिनो भाष्ये अपि पुरोहितशब्दः द्विधा व्याख्यातः – 'पुरोहितं शान्तिकपौष्टिकैः कर्मभिर्यो राजानमापद्भ्यस्त्रायते स पुरोहित इत्युच्यते तत्स्थानीयम् अथवा पूर्वस्यां दिशि निहितमाहवनीयात्मना स्थापितम्।'[15] इति।

वङ्गीयानुवादकेषु जगदीश्वरानन्देन पुरोहितशब्दस्य यज्ञभूमौ पुरोभागे अवस्थितः[16] इत्यनुवादः विहितः। अर्थाद् यज्ञस्य पुरोभागे विद्यमानः। रमेशचन्द्रदत्तः दुर्गादासलाहिडी चास्य शब्दस्य यज्ञस्य पुरोहितः इत्येव अर्थं प्रतिपादयति।

देवम् इत्यस्य पदस्य दानादिगुणयुक्तम् इत्यर्थमाह सायणः।[17] स्कन्दस्वामिनये तु पदस्यास्य दातारं दीप्तम् इत्यर्थद्वयं विद्यते।[18]

वङ्गीयानुवादकः दुर्गादासलाहिडीमहोदयः व्याख्यानावसरे देवशब्दस्य 'दीप्तिमान् दानादिगुण-युक्तश्च' इत्यर्थद्वयं स्वीकृतवान्। देवशब्दस्य रमेशचन्द्रदत्तस्य नये 'दीप्तिमान्' इति जगदीश्वरानन्दस्य नये 'दीप्यमानः' इति चार्थः।

**अग्निसूक्तस्य तृतीयो मन्त्रः**

**'अग्निना रयिमश्नवत् पोषमेव दिवेदिवे।**
**यशसं वीरवत्तमम्।।'** इति।

मन्त्रस्यास्य सायणानुसारेण अन्वयः तावत् – 'योऽयं होत्रा स्तुत्योऽग्निस्तेन अग्निना निमित्तभूतेन यजमानो रयिं धनम् अश्नवत् प्राप्नोति। कीदृशं रयिम्? दिवेदिवे पोषमेव प्रतिदिनं पुष्यमाणतया वर्धमानमेव, न तु कदाचिदपि क्षीयमाणम्। यशसं दानादिना यशोयुक्तम्। वीरवत्तमम् अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम्।'[19] इति।

सायणमते यशसम् इत्यस्य दानादिना यशोयुक्तम् इत्यर्थः। यशसम् इति पदं रयिम् इत्यस्य विशेषणम्। स्कन्दस्वामी अस्मिन् विषये प्राह – 'यशसम्, यशःशब्दः कीर्तिपर्यायः। यशश्च कीर्तिः चेत्यर्थः।'[20] इति। अर्थात् कीर्तिः अर्थः। मुद्गलभाष्ये अपि सायणानुसारेण दानादिना यशोयुक्तम् इत्यर्थो लभ्यते।

वङ्गीयानुवादकेन जगदीश्वरानन्देन पदस्यास्य 'दानादिना यशोयुक्तः'[21] इत्यनुवादः विहितः। रमेशचन्द्रः दुर्गादासलाहिडी च अमुमेवार्थं स्वीकरोति।

**'अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः।**
**देवो देवेभिरागमत्।।' इति पञ्चमो मन्त्रः।**

अत्र सायणभाष्यानुसारी अन्वयस्तावत् – 'अयम् अग्निः देवः अन्यैः देवेभिः सह आगमत् अस्मिन् यज्ञे समागच्छतु, कीदृशोऽग्निः? होता होमनिष्पादकः। कविक्रतुः कविशब्दोऽत्र क्रान्तवचनः। न तु मेधाविनाम। क्रतुः प्रज्ञानस्य कर्मणो वा नाम, ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा। सत्यः अनृतरहितः, फलमवश्यं प्रयच्छति इत्यर्थे चित्रश्रवस्तमः। श्रूयते इति श्रवः कीर्तिः, अतिशयेन विविधकीर्तियुक्तः।' इति।

सायणभाष्ये होता इत्यस्य पदस्य होमनिष्पादक इत्यर्थः। स्कन्दस्वामिना होता इत्यस्य पदस्य देवानाम् आह्वाता इत्यर्थः स्वीकृतः।

वङ्गीयानुवादेषु रमेशचन्द्रदत्तः होता इति पदस्य देवगणस्य आह्वानकारी इत्यर्थं स्वीकृतवान्। दुर्गादासमहोदयेन जगदीश्वरानन्देन च होमनिष्पादकः इत्येवार्थः स्वीक्रियते।

कविक्रतुः इति पदस्यार्थः सायणेन प्रोक्तः – 'कविक्रतुः कविशब्दोऽत्र क्रान्तवचनः। न तु मेधाविनाम। क्रतुः प्रज्ञानस्य कर्मणो वा नाम, ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा।'[22] इति। कविशब्दस्य क्रान्तम् इत्यर्थः। क्रतुशब्दस्य प्रज्ञानं कर्म वार्थः। कविः क्रतुः यस्य स कविक्रतुः। अर्थात् क्रान्तप्रज्ञः क्रान्तकर्मा वा।

स्कन्दस्वामिना स्पष्टतया अस्मिन् विषये उच्यते – 'सर्वत्राप्रतिहतं प्रज्ञानं कर्म वा यस्य स कविक्रतुः।'[23] इति। अर्थात् अप्रतिहतस्य ज्ञानस्य कर्मणो वा यः अधिकारी स कविक्रतुः।

रमेशचन्द्रदत्तः कविक्रतुशब्दस्य 'सिद्धकर्मा'[24] इति वङ्गानुवादं चकार। पुनः दुर्गादासलाहिडीमहोदयः अत्र 'अशेषप्रज्ञासम्पन्नः'[25] इति वङ्गानुवादं चकार। दीधितिविश्वासमहोदयाया नये 'क्रान्तप्रज्ञः क्रान्तकर्मा वा' इति वङ्गानुवादः।

सायणभाष्ये चित्रश्रवस्तमः इत्यस्मिन् विषये प्रोक्तम् – 'चित्रश्रवस्तमः श्रूयते इति श्रवः कीर्तिः, अतिशयेन विविधकीर्तियुक्तः।'[26] इति। अर्थात् चित्रं विविधा श्रवः कीर्तिः यस्य स चित्रश्रवाः। अतिशयेन चित्रश्रवाः चित्रश्रवस्तमः। स्कन्दस्वामिना भाष्ये प्रोक्तम् – 'चित्रं पूजनीयम्। विचित्रपर्यायो वा चित्रशब्दः। श्रव इत्यन्ननाम वा, धननाम वा, कीर्तिपर्यायो वा। अतिशयेन पूज्यं विचित्रं वा अन्नादीनाम् अन्यतमं यस्य स चित्रश्रवस्तमः।'[27] इति। चित्रशब्दः पूजनीयार्थकः विचित्रार्थको वा। श्रवःशब्दस्य अन्नं धनं कीर्तिः वा अर्थः। इत्थं चित्रश्रवस्तमः इत्यस्य पदस्य अतिशयेन पूज्यान्नयुक्तः, अतिशयेन पूज्यधनयुक्तः, अतिशयेन पूज्यकीर्तियुक्तः, अतिशयेन विविधान्नयुक्तः, अतिशयेन विविधधनयुक्तः अतिशयेन विविधकीर्तियुक्तः वा अर्थः।

रमेशचन्द्रदत्तेन आलोचनावसरे अस्य पदस्य 'प्रभूतविविधकीर्तियुक्तः'[28] इति वङ्गानुवादः विहितः। पुनः दुर्गादासलाहिडीमहोदयः अत्र 'अतिशययशःकीर्तिसम्पन्नः'[29] इति वङ्गानुवादं चकार। 'विचित्रकीर्तमतां मध्ये श्रेष्ठः' इत्यनुवादः दीधितिविश्वास-महोदयया विहितः।

**'यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि।**
**तवेतत्तत्सत्यमङ्गिरः।।'**

इत्यस्मिन् षष्ठे मन्त्रे अङ्ग इति निपातः अभिमुखीकरणार्थः सायणेन स्वीकृतः। स्कन्दस्वामिनो नये तु अङ्गेति निपातः पादपूरणार्थे क्षिप्रार्थे वा प्रयुज्यते। भद्रम् इत्यस्य पदस्य विषये सायणेन प्रोक्तम् – 'भद्रं

वित्तगृहप्रजापशुरूपं कल्याणं करिष्यामि।'[30] इति। भद्रशब्दस्य व्याख्यानावसरे 'यद्वै पुरुषस्य वित्तं तद् भद्रं गृहा भद्रं पशवो भद्रम्।' इति शाट्यायनब्राह्मणम् उद्धृतम्। स्कन्दस्वामिना भाष्ये प्रोक्तम् – 'भद्रं भजनीयं स्तुत्यमुत्कृष्टम्। इष्टमित्यर्थः। किं पुनस्तद् धनमन्नं वा।'[31] इति।

दुर्गादासमहोदयेन रमेशचन्द्रदत्तेन च तदीये अनुवादे कल्याणम् अर्थः स्वीकृतः। जगदीश्वरानन्दे मन्त्रस्यास्य अनुवादे वित्तगृहप्रजापशुरूपं कल्याणम् इत्येवार्थः स्वीकृतः।[32]

सायणनये अङ्गिरः इति पदम् अग्न्यर्थकम्। अङ्गिरस् इति शब्दस्य सम्बोधनैकवचने अङ्गिरः इति रूपम्। अङ्गिरः इति पदम् अग्न्यर्थकम् इत्यत्र ऐतरेय-ब्राह्मणस्य समाख्यानं सायणेनोक्तम्। तथाहि भाष्ये – 'ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनन्ति – येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन् इति। तस्माद् अग्निरोनामकमुनिकारणत्वाद् अङ्गाररूपस्याग्नेरङ्गिरस्त्वम्।'[33] इति। प्रजापति-दुहितृध्यानोपाख्याने वर्णितं यद् अङ्गारस्य अग्नेः उपरि उपविष्टः मुनिः अङ्गिरा अभवत्। इत्थम् अङ्गिरोमुनेः कारणत्वाद् अङ्गारः अग्निः अङ्गिराः। स्कन्दस्वामिनात्र प्रोक्तम्-'हे अङ्गिरः, अङ्गिरा ऋषिः। तस्योत्पत्तिकारणमग्निः, नाग्निरङ्गिराः। तेन अङ्गिरसः कारणमग्निः, नाग्निरङ्गिराः। अत इदं सोऽयमित्यभिसम्बन्धात् कार्यशब्देन कारणस्याभिधानम्। अङ्गिरसः कारणभूत इत्यर्थः।'[34] इति।

**'उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम्।**
**नमो भरन्त एमसि।।'**

इत्यस्य सप्तमस्य मन्त्रस्य सायणभाष्यं तावद् – 'हे अग्ने वयम् अनुष्ठातारो दिवेदिवे प्रतिदिनं दोषावस्तः रात्रावहनि च धिया बुद्ध्या नमः भरन्तः नमस्कारं सम्पादयन्तः उप समीपे त्वा एमसि त्वामागच्छामः।'[35] इति। सायणाचार्यस्य नये दोषावस्तः इत्यस्य रात्रौ अहनि इत्यर्थः। अत्र दोषाशब्दः रात्र्यर्थकः वस्तशब्दः च दिनार्थकः। स्कन्दस्वामिनो नये तु – 'दोषावस्तः दोषेति रात्रिनाम। वस आच्छादने। रात्रौ स्वेन ज्योतिषा तमसामाच्छादयितः।'[36] इति। दोषाशब्दः रात्र्यर्थकः। वस्-धातुः आच्छादनार्थकः वासार्थकः दीप्त्यर्थकश्च विद्यते। तत्र वस आच्छादने इत्यस्माद् धातोः तृच्प्रत्यये वस्तृशब्दः निष्पन्नः। आच्छादक इत्यर्थः। दोषावस्तृशब्दस्य सम्बोधनैकवचने दोषावस्तः इति रूपम्। अर्थात् रात्रौ स्वेन ज्योतिषा अन्धकाराणाम् आच्छादक इत्यर्थः। मुद्गलभाष्ये दोषावस्तः इति पदस्य रात्रावहनि इत्येवार्थो दृश्यते।

रमेशचन्द्रदत्तेनास्य मन्त्रस्य वङ्गानुवादे दोषावस्तः इति शब्दः दिवारात्रार्थकः गृहीतः।[37] अत्र दिवारात्रार्थकः एव दोषावस्तः इति शब्दः। जगदीश्वरानन्दस्य अनुवादे एव दिवारात्रार्थकमिदं पदम्। दुर्गादासलाहिडीमहोदयेन तु दिवारात्रं रात्रौ प्रकाशमान इत्यर्थद्वयं स्वीकृतम्।

धिया इति पदस्य सायणनये बुद्ध्या इत्यर्थः। स्कन्दस्वामी कथयति – 'धिया यादृश्यस्माकं प्रज्ञा।' इति।

रमेशचन्द्रदत्तेन 'मनसा सह' इत्यनुवादः अत्र विहितः। दुर्गादासलाहिडीमहोदयः अत्र 'अन्तरेण साकं सङ्कल्पविरहितचित्तेन वा'[38] इति वङ्गानुवादं विदधाति।

**'राजन्तमध्वराणां गोपामृतस्य दीदिविम्।**
**वर्धमानं स्वे दमे।।'**

इत्यस्य अष्टमस्य मन्त्रस्य सायणभाष्यं तावत् – 'पूर्वमन्त्रे त्वामुपेम इत्यग्निमुद्दिश्योक्तम्। कीदृशं त्वाम्? राजन्तं दीप्यमानम्। अध्वराणां राक्षसकृतहिंसारहितानां यज्ञानां गोपां रक्षकम्, ऋतस्य सत्यस्यावश्यम्भाविनः कर्मफलस्य दीदिविं पौनःपुन्येन भृशं वा द्योतकम्। आहुत्या-धारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते। स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भिः वर्धमानम्।'[39] इति।

राजन्तम् इत्यस्य पदस्य दीप्यमानम् इत्यर्थः सायणेन स्वीकृतः। स्कन्दस्वामिनये तु 'राजन्तम्, राजतिरैश्वर्यकर्मा ईशानम्।'[40] इति। अत्र राज्-धातुः ऐश्वर्यार्थकः स्वीकृतः।

ऋतस्य दीदिविम् इति पदद्वयं सायणेन व्याख्यातम् – 'ऋतस्य सत्यस्यावश्यम्भाविनः कर्मफलस्य दीदिविं पौनःपुन्येन भृशं वा द्योतकम्।' इति। स्कन्दस्वामिना अत्रोक्तम् – 'ऋतस्य यज्ञस्यैव दीदिविम् अत्यर्थं दीप्तम्।'[41] इति।

अन्वयावसरे स्कन्दस्वामिनः सायणाचार्यस्य महान् विभेदो दृश्यते। सायणानुसारेण अध्वराणाम् इति पदस्य गोपाम् इत्यनेन ऋतस्य इति पदस्य दीदिविम् इत्यनेनान्वयः। परन्तु स्कन्दस्वामिनो नये तु राजन्तम् इत्यस्य अध्वराणाम् इति पदेन अन्वयः।

रमेशचन्द्रदत्तेनास्य मन्त्रस्य वङ्गानुवादो विहितः यत् 'त्वं दीप्यमानः, त्वं यज्ञस्य रक्षकः, यज्ञस्य अतिशयदीप्तिकारकः यज्ञशालायां वर्धनशीलश्च।'[42] इति।

**समीक्षणम्** –

प्रबन्धे अस्मिन् आदौ अग्निदेवस्य माहात्म्यं प्रतिपादितम्। ततः ऋग्वेदस्य प्रथममण्डलस्य प्रथमस्य अग्निसूक्तस्य मन्त्रेषु विशिष्टानामंशानां व्याख्यानं विहितम्।

अत्र भाष्यपर्यालोचनावसरे पुरोहितशब्दः पर्यालोचितः। यथा राज्ञः पुरोहित इत्यादिना सायणेन यद् व्याख्यातं तेन हितसम्पादकः इत्यर्थः समागतः। अन्यश्च अर्थः आहवनीयरूपेण यज्ञस्य पुरोभागे अवस्थितः। स्कन्दस्वामिना शान्तिकपौष्टिकैः इत्यादिना वाक्येन पुरोहितशब्दस्य आपत्तारकः इत्यर्थः स्वीकृतः। अन्यश्च अर्थः सायणवत्समान एव। यद्यपि तात्पर्यदृष्ट्या हितसम्पादकः आपत्तारकः इत्यर्थद्वयं समानमेव तथापि तत्र कश्चन विभेदः अस्त्येव। वस्तुतः स्कन्दस्वामिना अत्र यास्काचार्यस्य मतं स्वीकृतम्। यास्काचार्यः निरुक्ते पुरोहितशब्दनिर्वचनावसरे कथयति – 'पुरोहितः पुर एनं दधति।' इति। अत्र दुर्गाचार्यः वृत्तौ आह – 'राजानो हि शान्तिकपौष्टिकाभिचारिकेषु कर्मसु एनं पुरोऽग्रे दधति धारयन्ति पुरष्कुर्वन्तीति पुरोहितः। पुरतो निधानात् पुरस्करणाद्वा।'[43] इति।

जगदीश्वरानन्देन तदीये अनुवादे यज्ञस्य पुरोभागे विद्यमानः इत्यर्थः यः स्वीकृतः स सायणानुसारी स्कन्दस्वाम्यनुसारी च। परन्तु तेन एक एव अर्थः अङ्गीकृतः। रमेशचन्द्रदत्तः दुर्गादासलाहिडी च यज्ञस्य पुरोहितः इति यम् अनुवादं विदधाति स हि स्कन्दस्वाम्यनुसारी सायणानुसारी च। कारणं यज्ञस्य पुरोहित इत्युक्ते राज्ञः पुरोहितवद् यज्ञस्य आपत्तारकः हितसम्पादको वा अर्थः।

देवशब्दस्य दानादिगुणयुक्तमित्यर्थः सायणेन स्वीकृतः। अत्र यास्कः –'देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा। यो देवः स

देवता।'[44] इति। अत्र चतुर्धा देवशब्दस्य निर्वचनं यास्काचार्येण विहितम्। दानम्, दीपनम्, द्योतनम् द्युस्थानीयता इत्येते गुणाः देवे भवन्ति। अत एव सायणाचार्यः प्राह दानादिगुणयुक्तम् इति। स्कन्दस्वामिना देवम् इति शब्दस्य दातारं दीप्तम् इत्यर्थद्वयम् उक्तम्। देवशब्दनिर्वचनाद् एव एतदर्थद्वयम् आगच्छति। परन्तु दिव्-धातुः दीप्त्यर्थकः अस्ति, परन्तु दानार्थको न विद्यते। अतः दीव्यतिर्दानार्थे दीप्त्यर्थे वा इति कथनम् असङ्गतं भाति। प्रसङ्गत उल्लेख्यं यद् 'अग्निर्होता कविक्रतुः' इत्यस्य मन्त्रस्य भाष्ये स्कन्दस्वामी देवः इत्यस्य पदस्य दानादिगुणः इत्यर्थं स्वीकृतवान्। दानादयः गुणाः यस्य स दानादिगुणः इति तात्पर्यम्।रमेशचन्द्रदत्तस्य 'दीप्तिमान्' इति, जगदीश्वरानन्दस्य 'दीप्यमानः' इत्यनुवादः च देव-शब्दार्थस्य एकदेशः। दुर्गादासलाहिडीमहोदयेन दीप्तिमान् दानादिगुणयुक्तो वा इति यदुक्तं तत्र वस्तुतः दानादिगुणयुक्तः इत्येव पर्याप्तम्। कारणं दीप्तिमत्त्वं दानादिषु एकः गुणः।

'अग्निना रयिमश्नवत्' इत्यस्मिन् मन्त्रे स्कन्दस्वामिनः सायणाचार्यस्य च महती विप्रतिपत्तिः। अत्र सायणाचार्यनये यशः अस्य अस्तीत्यर्थे यशस्-शब्दाद् अच्प्रत्यये यशसशब्दः निष्पन्नः। एतत्पदं रयिम् इत्यस्य विशेषणम्। परन्तु स्कन्दस्वामिनये यशसम् इति विशेष्यं पदम्। वीरवत्तमम् इत्यस्य विशेष्यं यशसम् इति पदम्। वीरवत्तमं यशसम् इत्यस्य तात्पर्यम् अतिशयेन वीरवत् वीरवत्तमं बहुभिः पुत्रैः सहितं यशः इति। अत्र सर्वे विद्वांसः सायणाचार्यमतम् अङ्गीकुर्वन्ति। जगदीश्वरानन्दस्य अनुवादः सायणानुसारी एव। दुर्गादासलाहिडीमहोदयेन अनुवादावसरे यशः इत्येवार्थः स्वीकृतः। परन्तु अन्वयानुसारि-व्याख्यानावसरे यशोयुक्तम् इत्यर्थः स्वीकृतः। इत्थं तदीयं मतमेव परस्परविरुद्धम्।

'अग्निर्होता कविक्रतुः' इत्यस्मिन् मन्त्रे होता इत्यस्य पदस्य होमनिष्पादक इत्यर्थः इति सायणः। अत्र स्कन्दस्वामिना होता देवानाम् अर्थाद् देवानाम् आह्वाता इत्यर्थः स्वीकृतः। यास्काचार्यः कथयति – 'होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभः।'[45] इति। होतृशब्दस्य द्विविधं निवर्चनमत्र प्रदत्तम्। तत्र आह्वानार्थे ह्वेधातोः होतृशब्दः निष्पन्नः इति प्रसिद्धं निर्वचनम्। अन्यच्च प्राचीननिरुक्तकारस्य और्णवाभस्य नये हु दानादानयोः इत्यस्माद् धातोः होतृशब्दः निष्पन्नः। इत्थं होमनिष्पादकः इत्यर्थः हुधातोरेव निष्पन्नः। ततः प्रसिद्धः आह्वाता इत्यर्थः। अतः स्कन्दस्वामिनः अर्थः समीचीनतरः। स्कन्दस्वामिनः मतमेव रमेशचन्द्रदत्तेन स्वीकृतम्। दुर्गादासमहोदयः जगदीश्वरानन्दः च अत्र सायणम् अनुसरति।

कविक्रतुः इति शब्दस्य क्रान्तप्रज्ञः क्रान्तकर्मा वा अर्थः सायणेन विहितः। स्कन्दस्वामिना स एवार्थः स्पष्टतया वर्णितः। क्रतुशब्दस्य प्रज्ञा कर्म वा अर्थः निरुक्तसम्मत एव।[46] रमेशचन्द्रदत्तेन 'सिद्धकर्मा' इत्यनुवादः यः कृतः स न समीचीनः। अत्र दुर्गादासलाहिडीमहोदयस्य 'अशेषप्रज्ञासम्पन्नः' इत्यनुवादः तथापि समीचीनः भाति।

सायणभाष्ये चित्रश्रवस्तमः इत्यस्य पदस्य अतिशयेन विविधकीर्तियुक्तः इत्यर्थः अङ्गीकृतः। स्कन्दस्वामी तु चित्रशब्दस्य पूजनीयार्थत्वं विचित्रार्थकत्वं च कथयति। चित्रशब्दस्य पूजनीयार्थः तथा न प्रसिद्धः। श्रवश्शब्दस्य अन्नं धनं कीर्तिः इत्यर्थत्रयं यत् स्कन्दस्वामिना स्वीक्रियते तत् निरुक्तसम्मतम्। श्रवश्शब्दः प्रशंसार्थे धनार्थे च विद्यते इत्याह यास्कः – 'श्रवश्चापि पशुमच्च यूथम्। प्रशंसां च यूथं च धनं च यूथं चेति वा।'[47] इति। 'आसस्राणासः' इत्यस्य मन्त्रस्य व्याख्यानावसरे यास्केन श्रवः इत्यस्य शब्दस्य अन्नार्थकत्वमपि प्रतिपादितम् – 'श्रव इत्यन्ननाम श्रूयत इति।'[48] इति। इत्थम् अतिशयेन विविधान्नयुक्तः, अतिशयेन विविधधनयुक्तः अतिशयेन विविधकीर्तियुक्तः इत्यर्थत्रयं साधु भाति। रमेशचन्द्रदत्तस्य अनुवादः सायणानुसारी एव। दुर्गादासलाहिडी-महोदयस्य 'अतिशययशः कीर्तिसम्पन्नः' इत्यनुवादः स्कन्दस्वामिनः भाष्यम् अनुसरति।

सूक्तस्यास्य 'यदङ्ग दाशुषे' इत्यस्मिन् षष्ठे मन्त्रे शाट्यायनब्राह्मणम् आश्रित्य भद्रशब्दस्य वित्तगृहप्रजापशुरूपार्थः सायणेन स्वीकृतः। भद्रं हि कल्याणं तदेव इष्टम्। परन्तु स्कन्दस्वामिना धनम् अन्नं च इष्टम् उल्लिखितम् इति भेदः। दुर्गादासमहोदयेनापि भद्रशब्दस्य कल्याणार्थः स्वीकृतः। जगदीश्वरानन्देन तु साक्षात् सायणभाष्यानुसारेण 'वित्तगृहप्रजापशुरूपं कल्याणम्' इत्यर्थः अङ्गीकृतः। कार्यकारणयोः अभेदोपचाराद् अङ्गिरोमुनेः कारणे अग्नौ अङ्गिरस् इति व्यवहारः इति सायणस्य स्कन्दस्वामिनश्च मतम्।

सूक्तस्यास्य 'उपत्वाग्ने' इत्यस्य सप्तमे मन्त्रे दोषावस्तः इति पदस्य सायणाचार्यस्य नये रात्रौ अहनि इत्यर्थः। अत्र दोषाशब्दः रात्र्यर्थकः वस्तशब्दः च दिनार्थकः, तयोः समाहारद्वन्द्वः। अत्र स्कन्दस्वामिना रात्रौ स्वेन ज्योतिषा तमसाम् आच्छादयितः इत्यर्थः स्वीकृतः। वस आच्छादने इत्यस्माद् धातोः तृच्प्रत्यये वस्तृशब्दः निष्पन्नः। आच्छादक इत्यर्थः। दोषायाः वस्ता इति विग्रहे दोषावस्तृशब्दः निष्पन्नः, तस्य सम्बोधनैकवचने दोषावस्तः इति रूपम्। सायणेन दोषावस्तः इत्यत्र यः द्वन्द्वसमासः स्वीकृतः स न समीचीनः। दोषावस्तः इत्यत्र द्वन्द्वसमासस्वीकारे 'कार्तकौजपादयश्च' इत्यनेन सूत्रेण दोषा इति पूर्वपदस्य प्रकृतिस्वरः भवति। दोषाशब्दः अन्तोदात्तः अस्ति, अतः दकारोत्तर ओकारः कदापि उदात्तो न भवति। अर्थाद् आद्युदात्तो न भवति। परन्तु मन्त्रे तथा नास्ति। किञ्च, पदपाठे दोषाऽवस्तः इत्यवग्रहयुक्तः पाठो दृश्यते। द्वन्द्वसमासे कदापि अवग्रहः न शाकल्येन प्रयुज्यते। अतः नात्र द्वन्द्वसमासः। सायणाचार्येण अपि ऋग्वेदे अन्यत्र दोषावस्तः इति पदव्याख्यानावसरे अत्र तत्पुरुषः समासः स्वीकृतः।[49] 'क्षपां वस्ता जनिता सूर्यस्य' (3।49।4) इत्यस्य इन्द्रसूक्तस्य मन्त्रस्य व्याख्यानावसरे सायणः एव आच्छादनार्थकाद् वस्-धातोः तृचि वस्ता इति निष्पन्नमिति50 स्वीकृतवान्। इत्थं दोषावस्तः इत्यत्र तत्पुरुषसमासः दोषायाः तमसाम् आच्छादयितः इत्यर्थः च स्वीकार्यः। अतः सायणानुसारी रमेशचन्द्रस्य जगदीश्वरानन्दस्य चानुवादः न समीचीनः।दुर्गादासमहोदयस्य दिवारात्रम् इत्यनुवादः हेयः, रात्रौ प्रकाशमान इत्यनुवादः तु समीचीनः।

बुद्धिः प्रज्ञा च समाना एव। अतः धिया इति पदस्य सायणेन स्कन्दस्वामिना च समान एव अर्थः विहितः। बुद्धिः हि निश्चयात्मिका भवति। सङ्कल्पविकल्पात्मकं च मनः। तथापि सामान्यतया बुद्धिशब्दः

मनःशब्दश्च पर्यायवाची गृह्यते। अतः रमेशचन्द्रदत्तस्य %मनसा सह% इत्यनुवादः समीचीन एव। दुर्गादासलाहिडीमहोदयस्य %अन्तरेण सह सङ्कल्पविरहितचित्तेन वा% इत्यनुवादः वस्तुत आध्यात्मिकदृष्टिम् आश्रितः। अतः स कथयति सङ्कल्पविरहितचित्तेन भगवदाराधनमेव सफलं भवतीति। परन्तु अग्निसूक्ते यजमानाः सङ्कल्पितेन मनसा एव अग्निम् आराधयन्ति। अतः सूक्तस्यास्य दृष्ट्या धिया इत्यस्य सङ्कल्पविरहितचित्तेन इत्यर्थः न समीचीनः। 'अन्तरेण सहितः' इत्यनुवादः कथञ्चित् सङ्गतः इति वक्तुं शक्यते।

सूक्तस्यास्य 'राजन्तमध्वराणाम्' इत्यष्टमे मन्त्रे राजन्तम् इत्यस्य पदस्य स्कन्दस्वामिप्रोक्तः ईशानम् इत्यर्थः निरुक्तसम्मतः। राजृ दीप्तौ इति धातुम् आश्रित्य सायणेन दीप्यमानम् इत्यर्थः स्वीकृतः। अत्र सायणस्य स्कन्दस्वामिनश्च अन्वयविभेदाद् अर्थविभेदः इति वक्तुं शक्यते। रमेशचन्द्रदत्तः सायणानुसारिणम् अन्वयं स्वीकृतवान्। परन्तु ऋतस्य दीदिविम् इति पदद्वयस्य स्कन्दस्वाम्यनुसारेण 'यज्ञस्य अतिशयदीप्तिकारकः' इत्यनुवादं विहितवान्। दुर्गादासलाहिडीमहोदयस्य वङ्गानुवादः स्कन्दस्वाम्यनुसारी एव। इत्थम् अग्निसूक्तस्य समासेन समीक्षणं विहितम् इति शिवम्।

## पादटिप्पण्यः

1. ऋक्संहिता 7 ।15 ।2
2. वेदमीमांसा, द्वितीयखण्डः, पृष्ठसंख्या – 99
3. निरुक्तम्, सप्तमाध्यायः, पृष्ठसंख्या – 358
4. 'देवो देवेभिरागमत्।' 5. 'स इद्देवेषु गच्छति।'
6. निरुक्तम्, सप्तमाध्यायः, पृष्ठसंख्या – 369
7. 'यं त्वा द्यावापृथिवी यं त्वापस्त्वष्टा यं त्वा सुजनिमा जजान' – (ऋ0 सं0 10 ।2 ।9)
8. ङ्कद्गस्त्रद्ध स्ब्ह्ल्द्धश्द्यश्द्द4, ङ्कश्द्य 1, क्ड्डद्द ह्श. – 49
9. अथर्ववेदः 1 ।33 ।1 10. ऋ0 सं0 10 ।90 ।13
11. वेदमीमांसा, खण्डः –2, पृष्ठसंख्या – 366
12. एकं सद्विप्रा बहुधा वदन्ति – ऋ0 सं0 10 ।90 ।13
13. श्रुतिसञ्चयनम्, ऋक्संहिता (1 ।1 ।1) – सायणभाष्यम्, पृष्ठसंख्या – 2–3
14. ऋग्वेदः स्कन्दस्वाम्यादिभाष्योपेतः, पृष्ठसंख्या – 7
15. श्रुतिसञ्चयनम्, ऋक्संहिता (1 ।1 ।1) – स्कन्दस्वामिभाष्यम्, पृष्ठसंख्या – 6
16. ऋग्वेद – प्रथम खण्ड, पृष्ठसंख्या – 89
17. 'देवं दानादिगुणयुक्तम्।' – श्रुतिसञ्चयनम्, ऋक्संहिता (1 ।1 ।1) – सायणभाष्यम्, पृष्ठसंख्या – 2–3
18. 'देवं दीव्यतिर्दानार्थे दीप्त्यर्थे वा। दातारं दीप्तं वा।' – तत्रैव, पृष्ठसंख्या – 6
19. श्रुतिसञ्चयनम्, ऋक्संहिता (1 ।1 ।3) – सायणभाष्यम्, पृष्ठसंख्या – 8
20. तत्रैव, स्कन्दस्वामिभाष्यम्, पृष्ठसंख्या – 9
21. ऋग्वेद – प्रथम खण्ड, पृष्ठसंख्या – 89
22. श्रुतिसञ्चयनम्, ऋक्संहिता (1 ।1 ।5) – सायणभाष्यम्, पृष्ठसंख्या – 10
23. तत्रैव, स्कन्दस्वामिभाष्यम्, पृष्ठसंख्या – 10
24. ऋग्वेदसंहिता, पृष्ठसंख्या – 1
25. वेदः –1, ऋग्वेदसंहिता, पृष्ठसंख्या – 35
26. श्रुतिसञ्चयनम्, ऋक्संहिता (1 ।1 ।5) – सायणभाष्यम्, पृष्ठसंख्या – 10
27. तत्रैव, स्कन्दस्वामिभाष्यम्, पृष्ठसंख्या – 10
28. ऋग्वेदसंहिता, पृष्ठसंख्या – 1
29. वेदः –1, ऋग्वेदसंहिता, पृष्ठसंख्या – 35
30. श्रुतिसञ्चयनम्, ऋक्संहिता (1 ।1 ।6) – सायणभाष्यम्, पृष्ठसंख्या – 11
31. तत्रैव, स्कन्दस्वामिभाष्यम्, पृष्ठसंख्या – 11
32. ऋग्वेद – प्रथम खण्ड, पृष्ठसंख्या – 91
33. श्रुतिसञ्चयनम्, ऋक्संहिता (1 ।1 ।6) – सायणभाष्यम्, पृष्ठसंख्या – 11
34. तत्रैव, स्कन्दस्वामिभाष्यम्, पृष्ठसंख्या – 11
35. तत्रैव (1 ।1 ।7), सायणभाष्यम्, पृष्ठसंख्या – 12
36. तत्रैव, स्कन्दस्वामिभाष्यम्, पृष्ठसंख्या – 12
37. ऋग्वेदसंहिता, पृष्ठसंख्या – 1
38. वेदः –1, ऋग्वेदसंहिता, पृष्ठसंख्या – 45
39. श्रुतिसञ्चयनम्, ऋक्संहिता (1 ।1 ।8) – सायणभाष्यम्, पृष्ठसंख्या – 13
40. तत्रैव, स्कन्दस्वामिभाष्यम्, पृष्ठसंख्या – 13
41. तत्रैव, स्कन्दस्वामिभाष्यम्, पृष्ठसंख्या – 13
42. ऋग्वेदसंहिता, पृष्ठसंख्या – 1
43. निरुक्तम्, द्वितीयाध्यायः, पृष्ठसंख्या – 83–84
44. निरुक्तम्, सप्तमाध्यायः, पृष्ठसंख्या – 369
45. निरुक्तम्, सप्तमाध्यायः, पृष्ठसंख्या – 369
46. निरुक्तम्, द्वितीयाध्यायः, पृष्ठसंख्या – 105
47. निरुक्तम्, चतुर्थाध्यायः, पृष्ठसंख्या – 197
48. निरुक्तम्, दशमाध्यायः, पृष्ठसंख्या – 432
49. यद्वा दोषावस्तरिति सम्बुद्धिः। दोषाया रात्रिकृतस्य तमसो वस्तराच्छादयितर्निवारयितः–ऋक्संहिता 4 ।4 ।9, सायणभाष्यम्। दोषावस्तः रात्रेराच्छादयितः। तमसो वारयितररित्यर्थः–ऋक्संहिता 7 ।15 ।15, सायणभाष्यम्
50. वस आच्छादने इत्यस्य तृचि रूपम्। – ऋक्संहिता 3 ।49 ।4, सायणभाष्यम्।

## परिशीलितग्रन्थावली


1. अनिर्वाणः। वैदिक साहित्य – वेदमीमांसा। संस्कृत-बुक-डिपो। कलिकाता। 2006।
2. चन्द्रः, रमेशचन्द्रः। ऋग्वेदसंहिता। चट्टोपाध्यायः, देवीप्रसादः ; चक्रवर्ती, मणिः (सम्पा0)। तथागतः। कलिकाता। 2018।
3. जगदीश्वरानन्दः, श्रीमत्स्वामी। ऋग्वेद – प्रथम खण्ड। श्रीरामकृष्णधर्मचक्र। बेलुडः। 1365 वङ्गाब्दम्।
4. भट्टाचार्यः, भवानीप्रसादः ; अधिकारी, तारकनाथः। वैदिक सङ्कलन – प्रथम खण्ड। संस्कृत-बुक-डिपो। कलिकाता। 2014।
5. मुखोपाध्यायः, गोविन्दगोपालः। श्रुतिसञ्चयनम् – प्रथमखण्डः। वर्धमानविश्वविद्यालयः। वर्धमानम्। 2011।
6. यास्कः। निरुक्तम् (कश्यपप्रजापतिकृतनिघण्टुभाष्यरूपम्)। शर्मा, मुकुन्दझा (सम्पाश)। चौखम्बा संस्कृत प्रतिष्ठान। दिल्ली। 2012।
7. लाहिडी, दुर्गादासः। वेदः – प्रथमखण्डः। लाहिडी, श्रीधीरेन्द्रनाथः (सम्पा0)। पृथिवीर इतिहास। हावडा। 1325 वङ्गाब्दम्।
8. वसुः, योगिराजः। वेदेर परिचय। कलिकाता फार्मा के-एल-एम् एल-टि-डि। कलिकाता। 2007।
9. विश्वासः, दीधितिः। वैदिक पाठसञ्चयन। पश्चिमवङ्ग-राज्य-पुस्तक-पर्षत्। कलिकाता। 2013।
10. सेनः, शुक्ला। श्रौतपाठ। संस्कृत-बुक-डिपो। कलिकाता। 2018।


*शोधच्छात्रा, संस्कृतविभागः*
*बाँकुडाविश्वविद्यालयः, बाँकुडा, पश्चिमवङ्गः*

ISSN 2456-3420

# ऋतुसंहारकाव्ये प्रथमसर्गे प्रतिपादितानां वनस्पतीनां आयुर्वेददृष्ट्या विवेचननम्

डॉ. नीरजतिवारी

**प्रस्तावना –**

ऋतुसंहार: खण्डकाव्यं कविकुलगुरुकालिदासरचितकाव्येषु प्रथम: स्वीक्रियते। काव्यमिदं सुललितं माधुर्यसमन्वितञ्च अस्ति। अत्र षट्सर्गा: राजन्ते। प्रथमसर्गे – अष्टविंशति: श्लोका: सन्ति। प्रथमसर्गे ग्रीष्म ऋत्तो: वर्णनम् अस्ति। द्वितीयसर्गे– प्रावृड्वर्णनं राजते। अस्मिन् सर्गे नवविंशति: श्लोका: राजन्ते। तृतीयसर्गे – शरद्–ऋत्तो: वर्णनमस्ति। अत्र अष्टाविंशति: श्लोका: सन्ति। चतुर्थसर्गे– हेमन्तवर्णनमस्ति। अस्मिन् सर्गे नवदश श्लोका: सन्ति। पञ्चमसर्गे –शिशिर–ऋत्तो: वर्णनं कविकुलगुरुकालिदासेन समुपस्थापितम्। अत्र षोडशश्लोका: सन्ति। षष्ठसर्गे – ऋतूनां श्रेष्ठस्य वसन्तस्य ऋत्तो: वर्णनम् अवलोक्यते। अस्मिन् सर्गे अष्टाविंशतिश्लोका: सन्ति। ऋतुसंहारस्य अन्तिमश्लोके कविना प्राकृतिकवर्णनेन सह सर्वेषां कल्याणस्य कामना कृता। यथा –

आम्री मङ्गलमञ्जरी वरशर: सत्किंशुकं यद्धनुर्ज्या यस्यालिकुलम् कलङ्करहितं छत्रं सितांशु: सितम्।

मत्तेभो मलयानिल: परभृता यद्वन्दिनो लोकजित्सोऽयं वो वितरीतरीतु विनतुर्भद्रं वसन्तान्वित:।।[1]

एवं वर्णनेन स्पष्टं भवति यद् ऋतुसंहारो मुख्यरूपेण प्राकृतिकवर्णनयुक्तं खण्डकाव्यमस्ति। वनस्पतीनां सर्वाणि तत्वानि ऋतुसंहारे दरीदृश्यते। अत एव अस्य काव्यस्य प्रतिष्ठा सम्पूर्णसंस्कृतवाङ्मये अस्ति। काव्यस्यास्य भाषा सुललिता सुमनोहराऽस्ति। सर्वाणि काव्यानि रससमन्वितानि सन्ति। एवं कथयितुं शक्यते यत् काव्यमिदं वनस्पतिविज्ञानदृष्ट्या महत्वपूर्णमस्ति। ऋतुसंहारखण्डकाव्ये विविधप्रसङ्गनिरूपणमाध्यमेन षड्विंशति: (26) वनस्पतीनामुल्लेखो लभ्यते।

सम्प्रति ऋतुसंहारकाव्यस्य प्रथमसर्गे चन्दनं, मुस्तकं, कमलं, कुसुम्भं, कीचक:, शाल्मलि:, षड् वनस्पतीनां प्रतिपादनं वर्तते । द्वितीयसर्गे कमलं, कन्दली, बिम्बाफलं, कदम्बं, शाल:, अर्जुन:, केतकी, केसर:, अगरु:, चन्दनं, मालती, बकुल:, द्वादशवनस्पतीनामुल्लेखो वर्तते। तृतीयसर्गे व्रीहि:, कमलं, सप्तपर्ण:, मालती, काञ्चनार:, कदम्बं, कुटज:, अर्जुन:, शाल:, अशोक:, बन्धूक:, द्वादशवनस्पतीनामुल्लेखो वर्तते। चतुर्थसर्गे गोधूम:, यव:, लोध्र:, व्रीहि:, कमलं,चन्दन, अगरु:, प्रियङ्गु:, अष्टवनस्पतीनामुल्लेखो वर्तते। पञ्चंसर्गे ईक्षु:, व्रीहि:, चन्दनं, ताम्बूलं, अगरु:, कमलं, सप्तवनस्पतीनामुल्लेखो वर्तते। षष्ठसर्गे आम्र:, कमलं, कर्णिकार:, नवमल्लिका, चन्दनं, प्रियङ्गु:, केसर:, अगरु:, अशोक:, अतिमुक्तक:, कुरबक:, पलाश:, लोध्र:, कुन्दं, चतुर्दशवनस्पतीनामुल्लेखो वर्तते। अनेन प्रकारेण सम्पूर्णे ऋतुसंहारखण्डकाव्ये विविधप्रसङ्गनिरूपणमाध्यमेन षड्विंशति: (26) वस्पतीनां प्रतिपादनं वर्तते।किन्तु अत्र प्रथमसर्गस्थ वनस्पतीनां आयुर्वेददृष्ट्या विवेचनं क्रियते ।

**विषयप्रवेश:–**

सम्प्रति ऋतुसंहारकाव्यस्य प्रथमसर्गे चन्दनं, मुस्तकं, कमलं, कुसुम्भं, कीचक:, शाल्मलि:, आदि षट् वनस्पतय: इमानि सन्ति । तद्यथा –

**1. चन्दनम् –**

**संस्कृतभाषायां नामानि –**

चन्दनम्, गन्धसारं, महार्हं श्वतेचन्दनं, भद्रश्रियं, श्रीखण्डं, मलयजं, गोशीर्ष:, तिलपर्णकम्, इत्यादय: इति।[2]

**वनस्पति: परिचय: –**

चन्दनवृक्ष: दीर्घाकारो भवति एवं पत्रं निम्बवृक्षपत्रसदृशो भवति, फलं वृत्ताकारं चर्णकान्नवत् भवति। अयं कर्नाटकप्रदेशेषु मलयपर्वतेषु च प्रचुरतया उत्पद्यते। पीतचन्दनं उत्तराखण्डेषु गन्धमादनपर्वतोपरि प्राप्यते। वर्षाकालादारभ्य शरदृतुपर्यन्तं अस्य पुष्पोदगम: काल: वर्तते एतदनन्तरं फलं आयाति। चन्दनस्य बहुप्रजातय: अपि शास्त्रेषु निगदिता: वर्तन्ते। यथा –1. श्वेतचन्दनम् 2. पीतचन्दनम् 3. शवरचन्दनम् 4. रक्तचन्दनम्5. पतङ्गचन्दनम्6. बर्बरचन्दन:7. हरिचन्दनम्।[3] परन्तु एषु सप्तषु मध्ये श्वेतचन्दनं सर्वोकृष्टं भवति।धन्वन्तरिणा निघण्टुग्रन्थे अपि एषां सप्तप्रजातीनां विषये चर्चा कृता वर्तते। अनेन प्रकारेण निघण्टुरत्नाकरकारेणापि चन्दनस्य भेदद्वयं निरूपितं वर्तते। तद्यथा–

चन्दन द्विविधं प्रोक्तं वेट्टसुक्कडिसांज्ञिकम्। वेट्टं तु साईविस्फोटं स्वयं शुष्कं तु सुक्कडि।।[4]

वस्तुत: उपर्युक्तस्य भेदद्वयस्य विषये विशिष्टप्रसङ्गोऽस्ति। य: मलयाचलस्य समीपे भवन्ति तद् वेट्टम् इति कथ्यते तथा वेट्टनामकपर्वतोपरि य: भवति तत् चन्दनं वेट्टं संज्ञयाभिधीयते। वेट्टचन्दनं आर्द्रं एवञ्च सुक्कडिचन्दनं शुष्कं भवति। अनयो: द्वयो: आयुर्वेदात्मकगुण: अग्रे आयुर्वेदविज्ञानप्रकरणे विवेचयामि।

**काव्यात्मकमध्ययनविवेचनम् –**

महाकविकालिदास: केवलं ऋतुसंहारकाव्येएकादशस्थलेषु चन्दनवस्पतीनां विवेचनं विदधाति। तत्रादौ प्रथमसर्गे अस्मिन् श्लोके कान्तास्नेहामना: पुरुषो वक्ति स्वप्रियतमां यदेतस्मिन् ग्रीष्मर्तौ चन्द्रमस: ज्योत्स्नया रात्रीणां तमांस्यपाकृतानि भवन्ति, तथाविधा रात्रय:, जलयन्त्रमन्दिरभवनानि, मणीनां प्रकारा, चन्दनपङ्कश्चैतानि सुखप्रदानि भवन्ति। अत एव जना इमानि वस्तूनि कामयन्ते।[5]

अपि च अस्मिन्नेव सर्गे अस्मिन् श्लोके नायक: तेषामुपकरणानां वर्णनं करोति येषामुपकरणानां प्रयोगं कृत्वा कामिन्य: स्वप्रियतमानां सन्तापमपाकुर्वन्ति। तथाहिग्रीष्मर्तौ ता: स्वक्षौमवस्त्रमेखलामण्डितै: नितम्बमण्डलै:, चन्दनचर्चितै: हारालंकृतै: पयोधरै:, स्नानीयचूर्णसौगन्ध्यसुगन्धितै: कुन्तलकलापैश्च कामिनां पुरुषाणां निदाघमपाकुर्वन्ति।[6]

एवञ्च अस्मिन्नेव सर्गे अस्मिञ्छ्लोके नायको वक्ति स्वप्रियतमां यत् रमणीनां चन्दनेनानुलेपिता: हिमवत् गौरवर्णा: वक्षोजा: सुवर्णरसनया मण्डिता: नितम्बभागाश्चावलोकनमात्रेणैव कामिनां हृदयेषु कामाग्निं संवर्द्धयन्ति।[7]

अपि च अस्मिन्नेव सर्गे श्लोकेस्मिन् कविकल्पितो नायक: स्वप्रेयसीं प्रति तेषां वस्तूनामुल्लेखं करोति यानि वस्तूनि ग्रीष्मर्तौ कामावेगविजृम्भकाणि भवन्ति। स वक्ति यत् साम्प्रतम् चन्दनमिश्रितजलेनाद्रीकृतानां व्यजनानां वायुभि: हारमण्डितकुचमण्डल-समर्पणै: वीणा मधुरध्वने: मिश्रणेन मसृणसंगीतकध्वनिभि: ग्रीष्मर्तौ सुप्तोऽपि कामभाव: विबोध्यते इव।[8]

महाकविकालिदास: अत्र चन्दनस्य वैशिष्ट्यकारणात् विविधाख्यान माध्यमेन् निरूपणं करोति। किन्तु अस्मकं कृते चन्दनस्य कानि कानि वैज्ञानिकरहस्यानि प्रयोजनानि च सन्ति इति प्रतिपादयामि।

**आयुर्वेदात्मकं विवेचनम् -**

आयुर्वेदशास्त्रे चन्दनस्य गुणानुप्रयोगविषये विविधाचार्यै: एवं प्रतिपादितं हि -

चन्दनं कटुतिक्तं च स्वादे किञ्चित् कषायवत्। मुखरूग्नाशनं वृष्यं शीतलं कान्तिवर्द्धनम्।।

कामवृद्धिकरं लेपे रूक्षं सौरभ्यदं लघु। शीर्षरोगं श्रमश्लेष्मविषदाहास्त्रनाशनम्।।

स्वादे तिक्तं कषे पीतं छेदे रक्तं तनौ सितम्। ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते।

बिना मलयमन्यत्र चन्दनं न प्ररोहति।।[9]

चन्दनं शीतलं रूक्षं तिक्तमाह्लादन लघु। श्रम शोषविष श्लेष्म तृष्णापित्तास्रदाहनुत्।।[10]

दाहपित्तज्वरच्छर्दिमोह तृष्णा विनाशन:। रक्त रूड मूत्र कृच्छ्न: कासांश्चैव विनाशयेत्।।[11]

धन्वन्तरिणा निघण्टुग्रन्थे चन्दनस्य सप्तप्रजातीनां गुणा: एवम् ऊचु: -

1. श्वेतचन्दनम् - चन्दन शीतलं स्वादु तिक्तं पित्तविनाशनम्। 2. रक्तचन्दनम्- रक्तोद्रेकहरं हन्ति पित्तकोपं सुदारुणम्। 3. पतंगचंदनम्- कुचन्दनं तु तिक्तं स्यात् सुगन्धि व्रणरोपणम्। 4. पीतचन्दनम् - कालीयकं पवित्रढयं शीतल रक्तपित्तजित्। 5. बर्बरचन्दन: - अथ बर्बरिकं श्वेतं निर्गन्धं बर्बरोद्भवम्। पित्तासृक कफदाहघ्नं कृमिहनं गुरू रूक्षणम्।

अत: उपर्युक्तं आयुर्वेदविज्ञानात्मकं गुणं मानवसभ्यताया: हिताय लाभाय च लभ्यते। अनेन प्रकारेण चन्दनवनस्पतीनां समसामयिकेऽपि प्रयत्नेन संरक्षणेन संवर्धनेन च प्रकृतिपर्यावरणस्य परिपालनेन सहैव समेषां कृते औषधनिर्माणकार्यार्थेऽपि सुलभैव सर्वत्र लब्धं भविष्यति।

**2. मुस्तकम्**

**संस्कृतभाषायां नामानि -**

मुस्तकं, मुस्तं, वारिदनामकं, कुरुविन्द, नागरमुस्तकं, क्रोडकसेरुकं, भद्रमुस्तकं, गुन्द्रा इति।[12]

**वनस्पति: परिचय: -**

भारते सर्वत्र बहुलताया: व्यवहारो भवति। मुस्तकस्य प्रकारद्वयं प्राप्यते सामान्यक्षेत्रेषु मुस्तकरूपेण भवति एवञ्च पर्वतीयक्षेत्रेषु नागरमुस्तकरूपेण भवति। प्राय: वर्षर्तु: अस्योद्गमकाल: वर्तते। अयं तृणजातीयो वनस्पति: अस्ति। अस्य आकार -प्रकारत्यो:अयं एकहस्तात् त्रिहस्तपरिमितं लम्बायमानोदृश्यते। पत्राणि उपरितनेषु बीतस्तिमात्रं लम्बानि अर्धाङ्गुलविस्तृतानि भवन्ति एवं पुष्पाणि अपि अत्रैव जायन्ते। फलं लघु आमलकफलसदृशं उत्पद्यते।

**काव्यात्मकमध्ययनविवेचनम् -**

महाकविना कालिदासेन केवलं मुस्तकवनस्पतीनां वर्णनं ऋतुसंहारकाव्ये वारमेकं कृतम्। तत्रादौग्रीष्मऋतुवर्णननामके प्रथमसर्गे मुस्तकस्य प्रसङ्गे लिखितं यत् नायक: स्वनायिकां वक्ति यत् ग्रीष्मातिशयेन वराहयूथोऽप्यत्यन्तमाकुलीमनुभवति। अयं शुष्ककर्दमयु: सरस्सु मुस्ताक्षतिं कर्तुं स्वमुखाग्रभागेन सर: खनन् पातालं प्रविविक्षतीति।[13]

वस्तुत: अत्र काव्येऽस्मिन् महाकविना काव्यकथासौन्दर्यनिरूपणे ग्रीष्मर्तो: वैशिष्ट्यप्रतिपादने मुस्तकवनस्पतीनामुल्लेखं करोति, परन्तु मुस्तकवनस्पतीनां वैज्ञानिकोपयोग: मानवानां कृते किमस्तीति विवेचयामि।

**आयुर्वेदात्मकं विवेचनम् -**

आयुषविज्ञानेषु मुस्तकस्य प्रयोग: विविधव्याधिनिवारणाय क्रियते। भावप्रकाशकारेण उक्तं यथा -

मुस्तकं कटु हिमं ग्राहि तिक्तं दीपनपाचनम्।

कषायं कफपित्तास्रतृड्ज्वरारुचिजन्तुहृत। अनूपदेशे यज्जातं मुस्तकं तत्प्रशस्यते।।[14]

अत: आयुर्वेदविज्ञानात्मकमध्ययनेन ज्ञायते यद् अस्माकं कृते मुस्तक: परमोपयोगी वर्तते।

**3. कमलम्**

संस्कृतभाषायां नामानि -

नलिन, अरविन्द, महोत्पल, सहस्रपत्र, कमल, शतपत्र, कुशेशय,

पङ्केरुह, तामरस, सारस, सरसीरुह, बिसप्रसून, राजीव, पुष्कर,अम्भोरुह।[15]

वनस्पतिः परिचयः –

शास्त्रप्रमाणानुसारं कमलस्य त्रीणि भेदानि सन्ति। रक्तकमल–श्वेतकमल–नीलकमलश्च ।तद्यथा– श्वेतकमलस्य कृते पुण्डरीक, रक्तकमलस्य कृते कोकनद, नीलकमलस्य कृते इन्दीवरं इति भेदानुसारं संज्ञा वर्तते।[16] एतेषां सर्वेषां भेदानामुपयोगसन्दर्भस्य प्रयोगविज्ञानं आयुर्विज्ञानस्य विवेचनक्रमे करिष्यामि। वस्तुतः कमलम् शीतोष्णप्रदेशेषु प्रायः सर्वत्र सरोवरेषु भवति, अस्य मूलं सरोवरस्थपंके एव प्रसरन्ति। पत्रं द्वादशांगुलतः षडत्रिंशत् अंगुलपरिमितं वृत्ताकारं भवति। पुष्पाणि प्रायः ग्रीष्मवर्षर्तौ च विकसन्ति। स्वल्पकालव्यतीतानन्तरं पुष्पस्य गर्भे बीजानि भवन्ति, तेषामेव हिन्दीभाषायां कमलगट्टा, संस्कृतभाषायां पद्मबीज, मराठीभाषायां कमलकाकडी, गुजरातीभाषायां पावडी इति कथ्यते। अनेन प्रकारेण शास्त्रेषु कमलस्य विविधाः पर्यायाः एवं रूपेण प्राप्यन्ते। यथा – कमलम्, नवपत्रं, संवर्तिका, कर्णिका, किञ्जल्कम्, मृडालम्, स्थलकमलम्, कुमुदम्, कुमुदिनी, कल्हारम् इति एतेषां प्रयोगविज्ञानं आयुर्वेदविज्ञानधिया भिन्ना–भिन्ना वर्तन्ते।

**काव्यात्मकमध्ययनविवेचनम् –**

अथ च ऋतुसंहारकाव्यस्य ग्रीष्मऋतुवर्णननामके प्रथमसर्गे तत्रादौ श्लोकेऽस्मिन् कमलनालस्य वर्णनं वर्तते। अत्र कविनिबद्धो वक्ता नायकः स्वप्रियतमां ग्रीष्मकाले, गजसमूहेन सरसः क्रियमाणां दुर्दशां दर्शयन् वक्ति यत् अत्र सरसि परस्परं पीडयन्तैः गजैः सरसः सम्पूर्णमृणालदण्डमुत्खातितम्, एतेषामुत्पातेन जलस्था मीनाः विपन्नाः संजाताः, सरसि विद्यमानाः निखिला सारसपंक्तिश्चोत्पातिता वर्त्तते। इत्थं गजानामुपद्रवेण कासारस्य सम्पूर्णा श्रीरेव विनष्टप्राया वर्त्तते। सम्पूर्णः कासार एव कर्दममयः संजातः।[17]

अस्मिन्नेव सर्गे अनेन श्लोकेन साकं कविनिवद्धो वक्ता नायकः स्वप्रियतमां प्रति ग्रीष्मर्तोः वर्णनस्योपसंहारं करोति। बहुषु श्लोकेषु वनेषु प्रसृमरस्य दावाग्नेः विनाशलीलायाः वर्णनं कृत्वाऽन्ते सः ग्रीष्मकाले यानि वस्तूनि सुखकराणि भवन्ति तेषां वर्णनं करोति। स वक्ति यत् साम्प्रतं पाटलपुष्पाणि विकसितानि सन्ति मधुरा–मोदभराणि, कमलान्यपि पुष्करिणीषु सन्ति विकसितानि, अतएव त्वम् चन्द्रहारेणाञ्चितसौभाग्यसम्पन्नविलासिनीभिः साकं सुललितानि गीतानि गायन्ती सती क्षपाः क्षपयस्व।[18]

महाकविना काव्येऽस्मिन् काव्यकथान्तर्गते काव्यसौन्दर्याय विविधप्रसङ्गेषु कमलस्य विवेचनं क्रियते, परन्तु चराचरजीवानां कृते कमलस्य कानि कानि आयुर्वेदात्मकानि तथ्यानि तत्त्वानि रहस्यानि प्रयोगाश्च सन्तीति सविस्तरं विचारयामि।

**आयुर्वेदात्मकं विवेचनम् –**

आयुषशास्त्रे कमलस्य विविधप्रजातीनां तथा च एतस्य अवयवानां गुणानुप्रयोगविषये विस्तारेण वर्णनं लभ्यते। तत्रादौ कमलस्य गुणाः निरूप्यन्ते। यथा –

कमलं शीतलं वयं मधुरं कफपित्तजित। तृष्णादाहालविस्फोट–विषवीसर्पनाशनम् ॥[19]

**अथ नामोल्लेखपूर्वकं कमलभेदाँस्तद्गुणाँश्चाह –**

विशेषतः सितं पनं पुण्डरीकमिति स्मृतम्। रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम्॥4

धवलं कमलं शीतं मधुरं कफपित्तजित। तस्मादल्पगुणं किंचिदन्यतोत्पलादिकम्॥[20]

अनेन प्रकारेणपद्मिनी। तस्या लक्षणनामगुणानाह –

मूलनालदलोत्फुल्लफलैः समुदिता पुनः। पद्मिनी प्रोच्यते प्राबिसिन्यादि च सा स्मृता।।

आदिशब्दावलिनी कमलिनीत्यादि ॥

पद्मिनी शीतला गुर्वी मधुरा लवणा च सा। पित्तामुक्कफजुद्रूक्षा वातविष्टम्भकारिणी।।[21]

**अथ नवपत्रादि। तस्य नामान्याह –**

संवत्तिका नवदलं बीजकोशस्तु कर्णिका। किञ्जल्कः केशरः प्रोक्तो मकरन्दो रसः स्मृतः।

पद्मनालं मृणालं स्यात्तथा बिसमिति स्मृतम् ॥

संवर्तिका हिमा तिक्ता कषाया दाहतृटप्रणुत्। मूत्रकृच्छ्रगुदव्या–धिरक्तपित्तविनाशिनी॥[22]

अथ कर्णिका (बीजकोशः)। तस्या गुणानाह –

अस्य कर्णिका तिक्ता कषाया मधुरा हिमा। मुखवैशद्यकुल्लध्वी तृष्णाऽत्रकफपित्तनुत्॥[23]

अथ किञ्जल्कः (कमलकेशरः)। तस्य गुणानाह –

किल्कः शीतलो वृष्यः कषायो ग्राहकोऽपिसः। कफपित्ततृषादा–हरक्ताशेविषशोथजित्॥[24]

अथ मृणालं शालूकञ्च। तयोर्गुणानाह –

मृणालं शीतलं वृष्यं पित्तदाहाजिद् गुरु ॥

दुर्जरं स्वादुपाकश्च स्तन्यानिलकफप्रदम्। संग्राहि मधुरं रूक्ष शालूकमपि तद्गुणम्॥[25]

अथ स्थलकमलम्। तस्य नामगुणानाह –

पद्मचारिण्यतिथराऽव्यथा पद्मा च शारदा। पद्माऽनुष्णा कटुस्तिक्ता कषाया कफवातजित।

मूत्रकृच्छ्राश्मशूलघ्नो श्वासकासविषापहा॥[26]

चतुर्धा स्थलपमानि सेवन्ती गुलदावदी। नैपाली च गुलाबश्च बकुला कदम्बकः ॥ 1 ॥

अथ कुमुदम् 'कमोदनी' इति लोके। तस्य नामानि गुणांचाह–

श्वेतं कुवलयं प्रोक्तं कुमुदं करवं तथा। कुमुदं पिच्छिलं स्निग्धं मधुरं हलादि शीतलम् ॥[27]

अथ कुमुदिनी। तस्या नामगुणांश्चाह –

कुमुदती कैरविका तथा कुमुदिनीति च ॥सा तु मूलादिसर्वाङ्गरुक्ता समुदिता बुधैः।

पग्रिन्या ये गुणाः प्रोक्ताः कुमुदिन्याश्च ते स्मृताः ॥[28]

अथ कल्हारम्। तन्नामगुणानाह –

सौगन्धिकं तु कल्हारं हलकं रक्तसन्ध्यकम्। कल्हारं शीतलं ग्राहि विष्टम्भि गुरु रूक्षणम् ॥[29]

अत्र प्रतिपादितानि उपर्युक्तानि आयुर्वेदवैज्ञानिकाः सर्वे प्रयोगाः मनुष्याणां व्याधिशमनाय हिताय सुखाय च वर्तन्ते। अतः कमलवनस्पतीनां सर्वासां प्रजातीनां संरक्षणं सर्वविधप्रयत्नेन करणीयम्।

**4. कुसुम्भम्**

**संस्कृतभाषायां नामानि –**

कुसुम्भं, वह्निशिखं, वस्त्ररञ्जकम्, कुसुम्भं इति।[30]

**वनस्पतिः परिचयः –**

कुसुम्भलता भारते प्रायः सर्वत्रसमुपलभ्यते। इयं लताएकतः त्रीफीटपरिमाणपरिमितं उच्चैः भवति। पत्राणि लम्बानि, परितः अखण्डितानि तिक्ष्णाग्रवर्तीनि एवं कंटकयुतानि भवन्ति। पुष्पाणि कषायवर्णकानि वृत्ताकारगुच्छेषु आयान्ति। फलं चतुष्कोणीयं भवति। बीजानि श्वेतचिक्कणानि एवं शंखाकृतिवत् भवन्ति। अस्य कृषेः आधारितानि भेदानि अनेकानि प्रभेदानि संजायते तथापि ऐषां वर्गीकरणं वर्गद्वयेषु कर्तुं शक्यते। एकः कंटकयुतः भवति अपरश्च अंकटकः भवति। कंटकयुतस्यापेक्षया अकंटकस्य पुष्पात् बहूत्तमः वर्णः निःसरति। कंटकयुता लता तैलदृष्ट्या सर्वोत्तमा वर्तते।अस्य पुष्पाणि केसरसदृशानि दृश्यन्ते तथा वणिगजनाः केसरेषु अस्य मिश्रणमपि कुर्वन्ति। सर्वोत्तमकिंजल्कः सुगंधितः एकरंगकः भवन्ति, किन्तु कुसुम्भकेसरस्य तन्तुः गन्धरहितः तथा छायायुक्तः भवन्ति। अस्य पंचागस्य(बीज–तैल–पुष्प–पत्र–मूलञ्च) चिकित्सा व्यवहारेषु उपयुज्यन्ते।

**काव्यात्मकमध्ययनविवेचनम् –**

कविकुलगुरुकालिदासः कुसुम्भवनस्पतीनां वर्णनं केवलं ऋतुसंहारकाव्ये स्थलद्वये प्रथमेसर्गे षष्ठसर्गे च निरूपयति। तत्रादौ प्रथमसर्गे अस्मिञ्छ्लोके कविनिबद्धो नायकः स्वप्रियतमायाः समक्षं ग्रीष्मर्तौ वने प्रदीप्तस्याग्नेः भीषणतायाः वर्णनं कुर्वन् वक्ति यत् विकसितकुसुम्भ सदृशा दावाग्निशिखा रक्त–वर्णा वायोः साहाय्यमवाप्याति उद्दीप्ता भवति। सा पुष्पितवनवृक्षशिखां चुम्बितुमिव अत्युन्नता भवतीति प्रतीयते। तेन सर्वत्र धरित्री वनप्रान्तस्य भवति परिदग्धा।[31]

महाकविना काव्येऽस्मिन् कुसुम्भवनस्पतीनां सन्दर्भवशात् तदगुणमभिलक्ष्य वर्णनं विहितम्,परन्तु कुसुम्भवनस्पतीनां मध्ये के के रहस्यात्मकाः आयुर्वेदवैज्ञानिकाः गुणाः वैशिष्ट्याश्च वर्तन्ते तानि विचारयामि।

**आयुर्वेदात्मकं विवेचनम्–**

औषधशास्त्रेषु कुसुम्भस्य अनेकानि प्रयोगधर्माणि वर्णिताः सन्ति। यथा भावप्रकाशकारैः निरूपितं हि – कुसुम्भं वातलं कृच्छ्ररक्तपित्तक–फापहम् ॥[32]

एतदतिरिक्तं शास्त्रेषु राज्ञाणां अहर्निशस्वास्थ्यलाभाय कृतेअस्य तैलस्य मर्दनप्रयोगः लभ्यते। यथा –

अथ कौसुम्भतैलेन वर्षाभूरजसाऽपि वा। लिप्तपादः पुमान् रेतो न जहाति रतेऽद्भुतम्।।[33]

अनेन प्रकारेण कुसम्भस्यगुणानामायुर्वेदविज्ञानात्मकमध्ययनेन कथयितुं शक्यते यत् अस्माकं सृष्टौ प्रकृतिप्रदत्तः अयं वनस्पतिः वर्तते। अस्माकं सर्वेषां एतस्य संरक्षणं संवर्धनं च निजदायित्वं अस्ति। अतः प्रयत्नेनैतत् संरक्षणीयम्।

**5. कीचकः**

**संस्कृतभाषायां नामानि –**

वंशः, त्वकसारः, कर्मारः, त्वचिसारः, तृणध्वजः, शतपर्वा, यवफलं, वेणु, मस्करः, तेजनः इति।[34]

**वनस्पतिः परिचयः –**

वनस्पतिविज्ञानदृष्ट्या अयम् उष्णप्रदेशेषु सर्वत्रसुलभरूपेण लभ्यते। विशेषतः उत्कल–बिहार–उत्तरप्रदेश–आसाम–बङ्गादि एवं हिमालयस्य परिवर्तिक्षेत्रेषु प्राप्तं भवति। प्रायः त्रिंशत्चत्वारिंशत्फीटप–रिमाणपरिमितमारभ्यशतफीटपरिमाणं यावतं दीर्घं एवं पञ्चतः सप्ताङ्गुलपरिमितं स्थूलं भवति, अस्य पत्रं सार्धमेकाङ्गुलविस्तृतं तथा पञ्च–षष्ठाङ्गुलपरिमितं लम्बं भवति। अथ च केषुचिद् वंशेषु जीर्णानन्तरं एवं कानिचिद् जीर्णात् पूर्वं पुष्पाणि फलानि च समागच्छति, एवं अस्य गर्भे वंशलोचनमपि प्राप्यते यस्य आयुर्वेदविज्ञानात्मक उपयोगः शास्त्रेषु वर्णितो वर्तते। महाकविनापि वंशस्य हिमालयपर्वतस्य वर्णनक्रमे अस्य उल्लेखः कृतो वर्तते।

**काव्यात्मकमध्ययनविवेचनम् –**

अथ च ऋतुसंहारकाव्ये ग्रीष्मर्तोः वर्णननामके प्रथमसर्गे कीचकस्य प्रसङ्गे लिखितं हि नायकः कथयति स्वप्रियतमायाः सविधे ग्रीष्मर्तोः समृद्धस्य दवाग्नेः विनाशलीलायाः, तस्य सर्वजीवसन्तापकत्वं सर्वत्र प्रसृमरत्वं कारणेन शुष्कवंशस्थलीषु पटुनिनादैः च वर्णयति।[35]

कविना काव्येऽस्मिन् कीचकवनस्पतीनां वर्णनं काव्यकथाप्रसङ्गात् निरूप्यते। किन्तु कीचकवनस्पतीनां अस्माकं जीवनस्य कृते का उपयोग: तथा का च आयुर्वेदता वर्तते इति विवेच्यते।

**आयुर्वेदात्मकं विवेचनम्-**

किचकस्य औषधीयमुपयोग इत्थं प्राप्यते। यथा –

वंशोम्ल: तुवरस्तिक्त: शीतल सारको मत:। वस्तिशुद्धिकर: स्वादुश्छेदनो भेदको मत:।।

कफं रक्त रूजं पित्तं, कुष्ठं शोथं व्रणं तथा। मूत्रकृच्छ्र प्रमेहार्शान् हान्ति चैव विनाशयेत्।।[36]

अथ च विषयेऽस्मिन् भावप्रकाशकारेणापि उक्तं वर्तते। यथा –

वंश: सरो हिम: स्वादु: कषायो बस्तिशोधन:। छेदन: कफपित्तघ्न: कुष्ठास्त्रव्रणशोथजित्।।[37]

अनेन प्रकारेण वंशस्य करीरयवयोर्गुणं प्रतिपादितं वर्तते। यथा–

तत्करीर: कटु: पाके रसे रूक्षे गुरु: सर:। कषाय: कफकृत्स्वादुर्विदाही वातपित्तल:।।

तद्यवास्तु सरा रूक्षा: कषाया: कटुपाकिन:। वातपित्तकरा उष्णा बद्धमूत्रा: कफापहा:।।[38]

कीचकस्य उपरोक्तम् आयुर्वेदविज्ञानात्मकं गुणानामध्ययनेन् अस्माभि: ज्ञायते यत् कीचकस्य औषधनिर्माणदृष्ट्या उत्वा पर्यावरणदृष्ट्या संरक्षणं नितान्तमावश्यकमस्ति।

**6. शाल्मलि:**

**संस्कृतभाषायां नामानि –**

कुत्सितशाल्मलि:, रोचन:, कूटशाल्मलि:,[39] शाल्मलि, मोचा, पिच्छिला, पूरणी, रक्तपुष्पा, स्थिरायु:, कण्टकाढ्या, तूलिनी इति।[40]

**वनस्पति: परिचय: –**

शाल्मलि: वृक्ष: भारतस्य पश्चिमदक्षिणारण्येषु एवं उष्णप्रदेशेषु लभ्यते। अयं वृक्ष: पञ्चाशत्फीटपरिमाणत: शतफीटपरिमाणपरिमितं लम्बं भवति। वृक्षस्य शाखा परित: परित: विस्तृता भवति। पुरातनशाखा कण्टकरहिता भवति एवं नूतनशाखासु लघु–लघु कण्टकानि जायन्ते। पत्राणि पञ्चाङ्गुलमितलम्बायमानानिचतुरङ्गुलमितविस्तृतानि च भवन्ति। पुष्पाणि अल्पश्वेतानि अधिकाधिकानि रक्तवर्णकानि चतुरङ्गुलपरिमितं दीर्घाणि द्विरङ्गुल परिमितं व्यासाकाराणि भवन् ति यस्याभ्यन्तरे प्रकाशयुत: कार्पास (रूई) मध्ये कृष्णवर्णकानि बीजानि तिष्ठन्ति। शाल्मलिवृक्षात् रक्तवर्णक: अपारदर्शीनिर्यास: अपि प्राप्यते य: दक्षिणभारतेषु हत्तिमाननामक: निर्यास: कथ्यते।

**काव्यात्मकमध्ययनविवेचनम् –**

कविकुलगुरु: महाकविकालिदास: शाल्मलीवनस्पतीनामुल्लेख: ऋतुसंहारकाव्येषु सकृदेव वर्णयति। तत्रादौग्रीष्मऋतुवर्णननामके प्रथमसर्गे महाकवि: कालिदास: वनाग्ने: विशदं वर्णनं प्रस्तौति। कविनिबद्धो वक्ता नायक: स्वप्रियतमां वक्ति यत् साम्प्रतं ग्रीष्मर्तौ शाल्मलीनां वनेषु तु अग्निरयमतीव समृद्धिं गतो वर्त्तते।[41]

काव्येऽस्मिन् काव्यकथासौन्दर्यनिरूपणप्रसङ्गे ग्रीष्मर्तो: वैशिष्ट्यप्रतिपादने च शाल्मलीवनस्पतीनामुल्लेखो वर्तते, परन्तु शाल्मलीवनस्पतीनां आयुर्वेदवैज्ञानिकं वैशिष्ट्यं लोकस्य कृते किमस्तीति विचार्यते।

**आयुर्वेदात्मकं विवेचनम् –**

**अथ शाल्मलि: तस्य गुणश्चाह –**

शाल्मली शीतला स्वाद्वी रसे पाके रसायनी। श्लेष्मला पित्तवातास्त्रहारिणी रक्तपित्तजित्॥[42]

अथ कूटशाल्मलि: तस्य गुणश्चाह–

कूटशाल्मलिकस्तिक्त: कटुक: कफवातनुत् ॥

भेद्युष्ण: प्लीहजठरयकृद्गुल्मविषापह:। भूतानाहविबन्धास्त्रमेद: शूलकफापह:॥[43]

अथ मोचरस: (निर्यास:) तस्य गुणश्चाह –

निर्यास: शाल्मले: पिच्छा शाल्मलीवेष्टकोऽपि च।मोचास्त्रावो–मोचरसो मोचनिर्यास इत्यपि ॥

मोचास्त्रवो हिमो ग्राही स्निग्धो वृष्य: कषायक:। प्रवाहिकाऽति–सारामकफपित्तास्त्रदाहनुत् ॥[44]

अनया धिया शाल्मलि: वनस्पतीनां एतावता आयुर्वेदविज्ञानात्मकं विवेचनेन गुणा: औषधशास्त्रेषु प्राप्यन्ते। अत: शाल्मलिवृक्षस्य साम्प्रतिकेऽपि प्रयत्नेन संरक्षणं संवर्धनं च भवेदिति।

**उपसंहार: –**

सम्प्रति ऋतुसंहारकाव्यस्य प्रथमसर्गे चन्दनं, मुस्तकं, कमलं, कुसुम्भं, कीचक:, शाल्मलि:, आदि षट् वनस्पतय: पूर्णरूपेण आयुर्वेददृष्ट्या उपयोगिन: सन्ति । अत्र प्रतिपादितानां वनस्पतीनां परिचयाणामध्ययनेन समसामयिके अस्य स्वरूपं स्थानञ्च ज्ञातुं शक्यते। अत्र प्रतिपादितानां वनस्पतीनां रसायनविज्ञानादृष्ट्या प्रतीयते यत् अत्र विद्यमानेन रसायनेन समसामयिकाऽसाध्यरोगनिवारणाय एलोपैथिक औषधनिर्माणं क्रियते । अत्र प्रतिपादितानां वनस्पतीनां आयुर्वेदविज्ञानात्मकं विवेचनेन प्रतीयते यत् समसामयिकेऽपि गृहे सुलभतयैव औषधं निर्माय सेवनं कर्तुं शक्यते। एवं धर्मविज्ञानादृष्ट्या कथयितुं शक्यते यत् अस्माकं जीवनं वनस्पतिं विना नैव प्रचलिष्यति। यज्ञे समिधा रूपेण प्रयुज्यवृष्टिरन्नादि प्राप्ति: भवति। ऋतुसंहारकाव्यस्य प्रथमसर्गस्थं समागतं सम्पूर्णं वनस्पतिजातं प्राय: भारते सर्वत्र क्षेत्रगतभाषाप्रभेदेन लभ्यते।

ISSN 2456-3420

अत: अत्र वर्णिता: वनस्पतय: भारतीया दृश्यन्ते।अत्रोद्धृतेश्लोके शृङ्गारादिरसानां यथोचितं निर्वाहोऽस्ति। खण्डकाव्येऽस्मिन् कथावस्तु – कथोपकथनं पात्रचयनञ्च यथायोग्यं दृश्यते। अत्र वनस्पतीनां चित्रणं नैसर्गिकमस्ति। ऋतुसंहारकाव्यस्य प्रथमसर्गस्य श्लोके सर्वत्र पदानां समन्वयं कमनीयञ्चास्ति।

काव्यात्मकमध्ययनविवेचनेन श्लोके दृष्यते यत् प्रसादगुणस्य प्राधान्यम्, माधुर्योजगुणाभ्यां सह तस्य यथोचितं निर्वाहोऽस्ति।एवं वनस्पतीनां निरूपणे उपमादिकाव्यालङ्काराणां सावसरप्रयोग: वर्तते।

इत्थं निष्कर्षरूपेण वक्तुं समर्थोऽस्मि यत् ''ऋतुसंहारकाव्ये प्रथमसर्गे प्रतिपादितानां वनस्पतीनां आयुर्वेददृष्ट्या विवेचननम् '' विषय: सफलतामधिगच्छतीत्याशासे।

## सन्दर्भसूची

1. ऋतुसंहारम् – 6.35
2. चन्दनं गन्धसारं व महार्ह: श्वतेचन्दनम्।
भद्रश्रियं श्रीखण्डं मलयजं गोशीर्ष तिलपर्णकम्।। ध.नि.– पृ.122
श्रीखण्डं चन्दनं नम्री भद्र: श्रीस्तैलपर्णिक:।
गन्धसारी मलयजस्तथा चन्द्रातिश्च स।। बृ.नि.र.–पृ.94
3. बृ.नि.र.– पृ.98
4. शा.नि. कर्पूरादिवर्ग: – पृ.18
5. ऋतुसंहारम् – 1.2
6. ऋतुसंहारम् – 1.4
7. ऋतुसंहारम् – 1.6
8. ऋतुसंहारम् – 1.8
9. यज्ञमदुसूदनम् यज्ञविटपाध्याय: –पृ.14
10. बृ.नि.र.– पृ. 94
11. शा.नि. कर्पूरादिवर्ग: – पृ.17
12. मुस्तकं न स्त्रियां मुस्तं त्रिषु वारिदनामकम्।
कुरुविन्दश्च संख्यातोऽपर: क्रोडकसेरुक:।।
भद्रमुस्तत‌ञ्च गुन्द्रा च तथा नागरमुस्तक:। भा.प्र.नि.वटादिवर्ग:– पृ.243
13. ऋतुसंहारम् – 1.17
14. भा.प्र.नि. वटादिवर्ग: – पृ.243
15. वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्। सहस्रपत्रं कमलं शतपत्रं कुशेशयम्। पङ्केरुहं तामरसं सारसं सरसीरुहम्। बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च।। भा.प्र.नि. पुष्पवर्ग:–श्लो.1–2,
16. विशेषत: सितं पद्मं पुण्डरीकमिति स्मृतम्।
रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम्।। भा.प्र.नि.पुष्पादिवर्ग: – श्लो.4,
17. ऋतुसंहारम् – 1.19
18. ऋतुसंहारम् – 1.28
19. भा.प्र.नि. पुष्पवर्ग– श्लो. 3,
20. भा.प्र.नि. पुष्पवर्ग– श्लो. 4 – 5,
21. भा.प्र.नि. पुष्पवर्ग– श्लो. 6 –7,
22. भा.प्र.नि. पुष्पवर्ग– श्लो. 8 –9,
23. भा.प्र.नि. पुष्पवर्ग– श्लो. 10,
24. भा.प्र.नि. पुष्पवर्ग: – श्लो. 11,
25. भा.प्र.नि. पुष्पवर्ग: – श्लो. 12–13,
26. भा.प्र.नि. पुष्पवर्ग: – श्लो. 14,
27. भा.प्र.नि. पुष्पवर्ग: – श्लो. 15,
28. भा.प्र.नि. पुष्पवर्ग: – श्लो. 16–17,
29. भा.प्र.नि. पुष्पवर्ग: – श्लो. 18,
30. स्यात्कुसुम्भं वह्निशिखंवस्त्ररञ्जकमित्यपि। भा.प्र.नि. श्लो.–192
31. ऋतुसंहारम् – 1.24
32. भा.प्र.नि.– श्लो.192, पृ.112
33. Cosmetics & Perfumes in Sanskrit Literature A Study पृ.– 277
34. वंशस्त्वकसारकर्मारत्वचिसारतृणध्वजा:।
शतपर्वा यवफलो वेणुमस्करतेजना:।। भा.प्र.नि.गुडूच्यादिवर्ग:– श्लो.153,पृ.376
35. ऋतुसंहारम् – 1.25
36. शा.नि. गुडूच्यादिवर्ग: – पृ.362
37. भा.प्र.नि गुडूच्यादिवर्ग: – श्लो.154,
38. भा.प्र.नि.गुडूच्यादिवर्ग: – श्लो.155–156,
39. कुत्सित: शाल्मलि: प्रोक्तो रोचन: कूटशाल्मलि:। भा.प्र.नि. वटादिवर्ग:– श्लो.58,
40. शाल्मलिस्तु भवेन्मोचा पिच्छिला पूरणीति च।
रक्तपुष्पा स्थिरायुश्च कण्टकाढ्या च तूलिनी।। भा.प्र.नि. वटादिवर्ग: – श्लो.54,
41. ऋतुसंहारम् – 1.26
42. भा.प्र.नि. वटादिवर्ग: – श्लो. 55, पृ. 537
43. भा.प्र.नि. वटादिवर्ग: – श्लो. 58–59, पृ. 537
44. भा.प्र.नि. वटादिवर्ग: – श्लो.56–57, पृ.537

*असिस्टेंट प्रोफेसर, साहित्यविभाग:*
*केन्द्रीयसंस्कृतविश्वविद्यालय:*
*लखनऊपरिसर:, विशालखण्ड: 4,*
*गोमतीनगरम् लखनऊ, 226010*

ISSN 2456-3420

# श्रीविष्णुस्तोत्रेषु ध्वनिः

डॉ. ललितकिशोरशर्मा

श्रीमद्भागवतमहापुराणस्थ श्रीविष्णुस्तोत्रेषु ध्वनिः काव्यात्मतत्त्वभूतः तज्जन्यचमत्कारश्चात्रोदाहरणैः प्रकटीक्रियते, तदादौ ध्वनेः स्वरूपं संक्षेपेण प्रस्तूयते प्रसंगसंगतिसिद्धये।

**''यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**

**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः।।''[1]**

इति ध्वनिप्रस्थापनकाचार्यपादैः राजानकानन्दवर्धनैः ध्वनेः स्वरूपं प्रतिपादितम्। अत्रार्थः वाच्यः शब्दो वाचकः विशेषः, स्वार्थौ स्वश्च अर्थश्च स्वार्थौ गुणीकृतौ याभ्याम्, स्वशब्दो आत्मवाची, शब्दो गुणीकृताभिधेयः तेनार्थः गुणीकृतात्मा, शब्दो गुणीकृताभिधेयः, तम् अर्थं व्यङ्क्तः स काव्यविशेषो ध्वनिः।

**'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।'[2]**

वाच्याद् व्यङ्ग्ये अतिशयिनि उत्तमं काव्यं भवति तत् बुधैः काव्यतत्त्वमर्मज्ञैः वैयाकरणैश्च ध्वनिः कथितः। व्याकरणसम्प्रदाये ध्वनति स्फोटं व्यनक्ति इति ध्वनिः, अर्थात् स्फोटस्य अभिव्यञ्जकः शब्दः ध्वनिरिति, स्फोटश्च स्फुटति अर्थो यस्मात् स स्फोटः अर्थात् यस्मात् अर्थस्य प्रतीतिर्भवति स स्फोटः।

शब्दस्य द्वौ धर्मौ - ध्वनिः स्फोटश्च अर्थप्रकाशको वाचकः स्फोटः, तभिव्यञ्जको ध्वनिरिति वैयाकरणाः। ध्वनिर्द्विविधो प्राकृतो वैकृतश्च। स्फोटपलब्धौ कारणभूतं प्राकृतः, स्फोटानन्तरं श्रूयमाणो वैकृतो ध्वनिः कथ्यते। विवरणमिदं वैयाकरणानाम्। काव्याचार्याणां तूक्तमुपरि, तदनुसारं प्रधानभूतस्फोटरूपव्यङ्ग्य-व्यञ्जनक्षमस्य शब्दस्य कृते ध्वनिशब्दव्यवहारः क्रियते। ध्वन्यते व्यञ्जनया व्यज्यते अस्मिन् वाच्यार्थसमुदाये काव्ये इति ध्वनिः। ध्वनिशब्दोऽनेकार्थः तथा हि ध्वन्यते इति ध्वनिः रसादिरर्थः, ध्वनतीति ध्वनिः शब्दवाच्यादिरर्थः, ध्वन्यतेऽस्मिन् इति ध्वनिः शब्दादिगता शक्तिः। वस्तुतस्तु ध्वनति व्यञ्जनया रसादीन् प्रत्याययति इति ध्वनिः शब्दार्थसमुदायः। इदानीं प्रकृते तत्सद्भावं दर्शयामः।

**'इमे जनपदाः स्वृद्धाः सुपक्वौषधिविरूधः।**

**वनाद्रिनद्युदन्वन्तो ह्येधन्ते तव वीक्षितैः।।'[3]**

अत्र माता कुन्तिः श्रीकृष्णचन्द्रं स्तौति -

हे नाथ! इमे पुरोदृश्यमानाः इन्द्रप्रस्थादयः हस्तिनापुरादयश्च जनपदाः स्वृद्धाः सुसमृद्धाः सुपक्वौषधिविरूधाः वनशैलसरित् उदन्वन्तः तव वीक्षितैः त्वदीयवीक्षणेन तव कृपादृष्टिपातेन हि एधन्ते इति शब्दार्थः। श्लोके तव वीक्षणैः एते इमे जनपदाः समृद्धाः एधन्ते, सुखिनः, सम्पन्नाः जलान्नादिपूर्णाः भवन्ति। वीक्षणपदेन हेतुत्वमुक्तम्। अर्थात् भगवतः वीक्षणेनैव दयादृष्टिपातेनैव तत्र समृद्धिः सुखं शान्तिः च वर्तते नान्यत् किमपि कारणमम् इति ध्वन्यते। अत्र यद्यपि वीक्षणेन तेषां जनपदानां समृद्धीनां वर्धनमसम्भवम् किन्तु वीक्षणपदं भगवतः दयादृष्टिमात्रेण प्रपन्नतापूर्वकं दृष्टिपातेन इत्यर्थं प्रकटयति।

अतः 'वीक्षितैः' इति शब्दः स्वार्थं वाच्यं उपसर्जनीकृत्वा अर्थान्तरे संक्रमितत्वात् अर्थान्तरसंक्रमितवाच्यध्वनि4रत्र वर्तते।

अपि च -

**'भूतैर्महद्भिर्य इमाः पुरो विभु**

**निर्माय शेते यदमुषु पुरुषः।**

**भुङ्क्ते गुणान् षोडश षोडशात्मकः**

**सोऽलंकृषीष्ट भगवान् वचांसि मे।।'[5]**

अस्मिन् श्लोके परमहंसशिरोमणिशुकदेवमुनिकृता भगवत्स्तुतिरस्ति। स भगवान् मे वचांसि अलंकृषीष्ट, स षोडशात्मकः षोडश गुणान् भुङ्क्ते, स पुरुषः लोकान् निर्माय शेते। अत्र अलंकृषीष्ट भुङ्क्ते च द्वे क्रियापदे स्तः द्वयोः वाच्यः अन्वये अनुपपन्नत्वात् स्वसम्बद्धार्थज्ञापकत्ववाच्चात्रापि अर्थान्तरसंक्रमितवाच्यध्वनिः।

अपरत्र च -

**'दरीगम्भीरवक्त्रेण पिबता च नमस्तलम्।**

**लिहता जिह्वयार्क्षाणि ग्रसता भुवनत्रयम्।।'[6]**

अत्र वक्त्रेण नभस्तलस्य पानं न संभवम्, वक्त्रस्य भयङ्करता ध्वन्यते, पिबता पदम् अत्यन्ततिरस्कृतम्, स्वार्थं विहाय अन्यार्थं बोधयति अत एव अत्यन्ततिरस्कृतवाच्यध्वनिरत्र ज्ञेयः। अन्यः श्लोकः -

**'अपरा निमिषद् दृग्भ्यां जुषाणा तन्मुखाम्बुजम्।**

**आपीतमपि नातृप्यत् सन्तस्तच्चरणं यथा।।**

**तं काचिन्नेत्ररन्ध्रेण हृदिकृत्य निमील्य च।**

**पुलकाङ्ग्युपगुह्यास्ते योगीवानन्दसम्प्लुता[7]।।'**

श्रीकृष्णचन्द्रस्य व्रजस्त्रिभिः सह रमणानन्तरम् अन्तर्ध्यानस्य लीला ततश्च पुनः प्रकटनम् ताभिः सह रमणम् अस्मिन् प्रसंगे वर्णितमस्ति। श्रीकृष्णस्पन्दस्य पुनरागते सति स्त्रियः गोप्यश्च किं किं कुर्वन्ति इति वर्णयति - दृग्भ्यां नेत्राभ्यां तस्य भगवतः मुखाम्बुजं मुखारविन्दं सन्तः यथा तच्चरणारविन्दं पीत्वापि न तृप्यन्ति तथेव पीतवती अर्थात् अपरा काचिद् गोपी दृग्भ्यां नेत्राभ्यां तन्मुखाम्बुजम् आपीतम् अपि न अतृप्यत इति भावार्थः।

एवमेव -

**'कृष्णमागमतमाकर्ण्य विदर्भपुरवासिनः।**

**आगत्य नेत्राञ्जलिभिः पपुस्तन्मुखपङ्कजम्।।'**[8]

रुक्मिणीपरिणयप्रसंगे श्लोकोऽयं प्राप्यते। राज्ञा भीष्मकेन शासितः विदर्भदेशः आसीत् । भीष्मककन्या रुक्मिणी बभूव, तां परिणेतुं विदर्भदेशमागतं श्रीकृष्णचन्द्रं तत्रत्याः प्रजा जनाः विलोक्य तस्य परमात्मनः मुखपङ्कजम् नेत्राञ्जलिभिः पपुः इति श्लोकस्य तात्पर्यम्। अत्र नेत्राणामञ्जलिः न संभवति तेन मुखपङ्कजस्य पानमपि नोपपन्नम्। अत एव नेत्राणि तस्य मुखपङ्कजसौन्दर्यं तन्मयतया तादात्म्यभावेन विलोकयामासुः इति व्यङ्ग्यः। नेत्राञ्जलिः मुखपङ्कजम् इत्यादौ रूपकालंकारध्वनिः। श्रीकृष्णस्यालौकिक-सौन्दर्यं तदागमना आशापूर्तिः चापि ध्वन्यते।

एवञ्चात्यन्ततिरस्कृतवाच्यध्वनिर्ज्ञेयः। समानभावात्मकः श्लोकोऽन्यः यथा हि –

**'निरीक्ष्य तावुत्तमपूरुषौ जना मञ्चस्थिता नागरराष्ट्रका नृप।**

**प्रहर्षवेगोत्कलितेक्षणाननाः पपुर्न तृप्ता नयनैस्तदाननम्।।'**[9]

मथुरायां कंसस्य रंगशालायां समागतौ श्रीबलरामकृष्णचन्द्रौ विलोक्य प्रजाः नयनैः तयोरागमनं नयनैः पपुः किन्तु तृप्ता नाभूवन्। अत्रापि अत्यन्ततिरस्कृत-वाच्यध्वनिः। सौन्दर्यातिशयो व्यङ्ग्यः।

**'पिबन्त इव चक्षुर्भ्यां लिहन्त इव जिह्वया।**

**जिघ्रन्त इव नाशाभ्यां श्लिष्यन्त इव बाहुभिः।।'**[10]

अत्रापि श्रीकृष्णस्य जनैः चक्षुर्भ्यां पानं, जिह्वया लेहनम्, नाशाभ्यां घ्राणम् बाहुभ्यां च श्लेषनं न सम्भवम्। अतोऽत्र नेत्रादयः स्वसम्बद्धं दर्शनजन्यानन्दविशेषार्थं प्रत्यायन्ति। अतः अविवक्षितवाच्यो ध्वनिः स्पष्टम्। अपि च देवर्षिनारदकृतायां भगवत्स्तुतौ ध्वनिः –

**यस्यामलं दिवि यशःप्रथितं रसायां**

**भूमौ च ते भुवनमङ्गलदिग्वितानम्।**

**मन्दाकीनीति दिवि भोगवतीति चाधो**

**गंगेति चेह चरणाम्बु पुनाति विश्वम्**[11] **।।**

अपरत्र च पाण्डवैः द्रौपदीसहितैः स्तुतः श्रीकृष्णो नारायणः –

**'कुतोऽशिवं त्वच्चरणाम्बुजासवं**

**महन्मनस्तो मुखनिःसृतं सृतं क्वचित्।**

**पिबन्ति ते कर्णपुटैरदलं प्रभो**

**देहम्भृतां देहकृदस्मृतिच्छदम्।।**

**हित्वाऽऽत्मधाम विधुतात्मकृतव्यवस्थ**

**मानन्दसम्प्लवमखण्डमकुण्ठबोधम्।**

**कालोपसृष्टनिगमावत आत्तयोग**

**मायाकृतिं परमहंसगतिं नताः स्म।।'**[12]

अनेन विवरणेन ज्ञायते यत् श्रीविष्णोः स्तोत्रेषु ध्वनेः सद्भावः प्रचुरतया विद्यते। भगवद्भक्तानां भावेषु ध्वनेः चमत्कारस्तु विलोकनीयः।

**यदङ्घ्र्यनुध्यानसमाधिधौतया**

**धियामनुपश्यन्ति हि तत्त्वमात्मनः।**

**वदन्ति चैतत्कवयो यथारुचं**

**स मे मुकुन्दो भगवान् प्रसीदताम्**[13] **।।**

## सन्दर्भग्रन्थसूचिः


1. वैदिक साहित्य का इतिहास, श्रीगजाननशास्त्री मुसलगाँवकर, चौखम्भा संस्कृत संस्थान, वाराणसी, 1994
2. वैदिक साहित्य एवं संस्कृति, डॉ. कपिल देव द्विवेदी, विश्वविद्यालय प्रकाशन, वाराणसी, 2000
3. ध्वन्यालोकः, आचार्यजगन्नाथपाठकः, चौखम्बाविद्याभवनम्, वाराणसी, 2006
4. पुराणविमर्श, आचार्य बलदेव उपाध्याय, चौखम्भा विद्याभवन, वाराणसी, 1978
5. श्रीमद्भगवद्गीता, स्वामीद्वारिकादासशास्त्री, बौद्धभारती, वाराणसी, 2007
6. काव्यप्रकाशटीका, रेवाप्रसादद्विवेदी, काशीहिन्दुविश्वविद्यालय, वाराणसी, 1981
7. ध्वन्यालोकः (लोचनटीका), आचार्यजगन्नाथपाठकः, चौखम्बाविद्या-भवनम्, वाराणसी, 1982
8. काव्यप्रकाशः, पं.रघुनाथप्रसादचतुर्वेदी, चौखम्बासंस्कृतसंस्थान, वाराणसी, 2003
9. बृहदारण्यक, सुरेश्वरा आचार्य आनन्दाश्रम ग्रन्थावली, 16, पूना 1937
10. धर्मशास्त्र का इतिहास, पाण्डुरंग वामनकाणे, उत्तर प्रदेश हिन्दी संस्थान, लखनऊ, 1950
11. वाचस्पत्यम्, तारानाथ तर्कवाचस्पति, चौखम्भा संस्कृत सीरीज, वाराणसी, 1966-70
12. विष्णुपुराण, गीताप्रेस गोरखपुर, वि0सं0 1999
13. मनुस्मृतिः, पण्डित रामेश्वरभट्टः, निर्णयसागरयन्त्रालयः मुम्बई, 1929
14. महाभारत, गीताप्रेस गोरखपुर
15. श्रीमद्भागतपुराण, गीताप्रेस गोरखपुर


## सन्दर्भाः

1 ध्वन्यालोक – 1/8 2 काव्यप्रकाशः – 1/4

3 श्रीमद्भागवते – 1.8.40

4 अविवक्षितवाच्यो यस्तत्र वाच्यं भवेद् ध्वनौ। अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्।।

5 तत्रैव श्रीमद्भागवते – 2.4.23 6 तत्रैव – 6.9.16

7 तत्रैव – 10.33.8-9 काव्यप्रकाशे – 4.24

8 श्रीमद्भागवते – 10.53.36 9 तत्रैव – 10.43.20

10 तत्रैव – 10.43.21 11 तत्रैव – 10.70.44

12 तत्रैव – 10.83.3-4 13 तत्रैव – 2.4.21


*सहायकाचार्यः - साहित्यविभागे*

*केन्द्रीयसंस्कृतविश्वविद्यालयः, जयपुरपरिसरः, जयपुरम्*